❀ महाभगवते श्रीगौरचन्द्राय नम ❀

# ❀ श्रीउद्धवसन्देशः ❀

[ श्रीमद्रूपगोस्वामिविरचितः ]



प्रकाशकः
कृष्णदास,
( कुसुमसरोवर वाले )
(मथुरा)

प्रथमावृत्तिः १०००
श्रीरामनवमी
संवत् २०१४

भज--निताइ गौर राधेश्याम।
जप--हरे कृष्ण हरे राम॥

परमाराध्य, संकीर्त्तन प्रचारक, प्रेममयविग्रह, श्रीराधा-
रमणचरणदासदेव (बड़े बाबाजी) के अनुगत,
नित्यधामगत, श्रीगुरुदेव बाबाजिमहाराज
१०८ श्री बाबा (रामदासजी) के
पुनीत स्मरण में यह ग्रन्थ
समर्पित है।

## ❀ सूचना ❀

(क) उद्धवसन्देशस्येयं टीका श्रीमद्राधाचरणगोस्वामिन
पुस्तकालयतः प्राप्ता। तत्परिशिष्टे लिखितमिदम्—"सम्वत् १८८
मार्गशिरमासे शुक्ले पक्षे तिथौ नवम्यां चन्द्रवासरे श्रीमथुरा·
लिखितं साधुचरणेन" इति। (ख) अस्य दूतकाव्यस्यानुवादसंशोधन
"लक्ष्मीमपुरस्थितयुवराजदत्तकालेजस्थ" संस्कृताध्यापकमहोदयेन
प्रचुरपरिश्रमः कृतः।

२३सं०५ कुमार

# ❀ प्रस्तावना ❀

देवाचार्यं यं विदुः सत्कवित्वे पाराशर्यं तत्ववादे महान्तम् ।
श्रृङ्गारार्थव्यञ्जने व्याससूनुं स श्रीरूपः पातु नो भृत्यवर्गान् ॥

( बलदेवः )

उद्धवसन्देशाख्यदूतकाव्यमिदं महाभगवतः राधागोविन्दमिलित-विग्रहस्य, कलिपावनावतारस्य, प्रेमप्रदानायावतीर्णस्य श्रीकृष्णचैतन्य-देवस्य पार्षदप्रवरेण, कविमुकुटमणिना श्रीमद्रूपगोस्वामिचरणमहो-दयेन प्रणीतमिति गाथा रसिकहृदयक्षेत्रेषु जीवनतना नरीनर्त्ति । श्रीम-द्रूपगोस्वामिपादः विक्रमाब्दस्य पञ्चदशशतके वंगदेशान्तर्गतमुर्शिदाबा-दखण्डे 'रामकेलि' नाम्नि ग्रामे दाक्षिणात्यब्राह्मणवंशे आविर्बभूव । अस्य महोदयस्य पूर्वजानां वंशवृक्षः क्रमत इत्थंभूतः—(१) कर्णाटभूमि-पतिः श्रीसर्वज्ञः, (२) सकलयजुर्वेदस्योपदेष्टा अनिरुद्धदेवः (३) तस्या-निरुद्धस्य द्वयोर्महिष्योः सकाशात् रूपेश्वरहरिहरौ, (४) शिखरदेश-राज्यनिवासिनः श्रीरूपेश्वरस्य समस्त-यजुर्वेद-उपनिषद्विद्याविलसित-जिह्वः पद्मनाभ आसीत्,(५) नैहाटिनिवासिनः, गुणसमुद्रस्य,यशस्विनः पद्मनाभमहोदयस्य अष्टादश कन्याः पुरुषोत्तम-जगन्नाथ-नारायण-मुरारि-मुकुन्ददेवनामानः पञ्च पुत्राश्च आसन्, (६) सर्वकनिष्ठमुकुन्दस्य श्रीमान् कुमारदेव आसीत्, (७) वंगदेशनिवासिनः तस्य कुमारदेवस्य त्रयः पुत्रा बभूवुः । तेषु श्रीसनातनो ज्येष्ठः श्रीरूपो मध्यमः श्रीअनुप-मश्च कनिष्ठ आसीत् ।

श्रीमद्रूपसनातनौ तदानीन्तनवंगदेशाधिपस्य नृपतेः हुसेनशाहस्या-मात्यपदमलञ्चक्रतुः । महाप्रभोः श्रीचैतन्यदेवस्य महानुकम्पया तत्पदं गार्हस्थ्यं च तृणवत् परित्यज्य तदादेशतो झटिति वृन्दावनं गत्वा करंग-कौपीनधारिणौ वृक्षतलनिवासिनौ च भूत्वा विरेजतुः । श्रीमद्रूपगोस्वा-मिपादः कृष्णभक्तिरसभूषितान् बहु ग्रन्थान् समये रचयाञ्चकार । तेषु रसपरिपाटीवर्णने सिन्धुरिव "श्रीभक्तिरसामृतसिंधुः" जगन्मण्डले रसिकजनहृदयक्षेत्रान् सरसीकृत्य सर्वोपरि वरीवर्त्ति । भगवद् राधागो-विन्दयोरप्राकृतश्रृङ्गाररसवर्णने "उज्ज्वलनीलमणि" रेव अद्वितीय-

महोच्चतमो ग्रन्थराजः साहित्यभण्डारेऽपि नरीनर्त्ति। अपरे तु व्रजलीलाविषयवर्णनापरकं 'विदग्धमाधवनाटकम्' द्वारकालीलाविषयकवर्णनपरं 'ललितमाधवनाटकञ्च' जगद्विख्याते। पुनश्च ग्रन्थकारेण "दानकेलिकौमुदी" नाम्नी राधागोविन्दयोः दानलीलाविस्तारवर्णनकारिणी भाणिकाऽपि व्यरचि। भरतमुनिनिर्म्मितं "नाट्यशास्त्रं" रससुधाकरादिकं च दृष्ट्वा श्रीरूपपादेन "नाटकचन्द्रिका" नाम्नी नाट्यलक्षणमयी अपूर्व्वा पुस्तिका विरचिता। तन्निर्म्मिता "स्तवमाला" पि राधागोविन्दयोः स्तवादिवर्णने अत्यद्भुता भवति। भगवद्स्वरूपतत्वनिर्णये परमदक्षतरं ग्रन्थरत्नं 'लघुभागवतामृतं' कोऽपि न जानाति? श्रीराधागणोद्देशदीपिकाऽपि सगण-श्रीराधागोविन्दयोः सेवापरिपाटी-व्यवहार्यद्रव्य-स्थानादीनां वंशावल्यादीनां च परिचये महती प्रसिद्धा।

मथुरामण्डलान्तर्गत—वनोपवनादीनां संक्षेपतः वर्णनपरकं "मथुरामाहात्म्य" मपि सर्वोत्तमं भवति। "श्रीकृष्णजन्मतिथिविधि" रपि जन्माभिषेकादौ परमावश्यकः स्यात्। तद्विरचिता "प्रयुक्ताख्यचन्द्रिका"पि व्याकरणशास्त्रसम्बन्धी संक्षिप्तग्रन्थो दृश्यते। तन्निर्म्मितं "हंसदूताख्यं" दूतकाव्यं सहृदयरसिकहृदयेषु महत्कौतूहलं चमत्कारदिव्यविप्रयोगरसपोषणं च निर्वाधं ददाति अस्मिन् न सन्देहता। उद्धवसन्देशाख्यनामा प्रस्तुतप्रबन्धोऽयमपि न केषुचित् आश्चर्य्यसारवत्तां विरहरसवैचित्रीं च दधाति?

अस्मिन् उद्धवसन्देशाख्ये दूतकाव्ये नायकचूडामणिना श्रीकृष्णेन मथुरातः द्वारकातः वा उद्धवद्वारा विरहविधुराणां गोपाङ्गनानां सर्वेषां व्रजवासिनां वा सान्त्वनाय दौत्यं प्रेष्यते। श्रीमद्भागवते "गच्छोद्धव! व्रजं सौम्य! पित्रो र्नः प्रीतिमावह। गोपीनां मद्वियोगाधिं मत्सन्देशै र्विमोचय", सान्त्वयामास 'सप्रेमैरायास्य इति दौत्यकैः' इत्यादि श्लोकानवलम्ब्य अत्र ग्रन्थकारस्य रसिकजनहृदयपरिपोषिणी महती चेष्टा संदृश्यते। तत्र केन रूपेण किं सन्देशं नीत्वा केन मार्गेण मया मथुरातः वृन्दावनं गन्तव्यं कुत्र वा केन रूपेणावस्थेयं किं कर्त्तव्यं

का वा दशा वर्णनीया इत्यादिकं उद्धवं प्रति स्पष्टतः वर्णनं नास्ति। अतः तान् स्पष्टयितुं श्रीरूपगोस्वामिपादैरिदं उद्धवसन्देशाख्यं दूतकाव्यं व्यरचि। अत्र श्रीकृष्णेन स्वयं उद्धवाय गमनमार्गं वर्ण्यते। तद्यथा— प्राक् गोकर्णाख्यशिवस्थलं (१) तदनु-यमुनासरस्वतीसङ्गमः, (२) ततः कालीयह्रदपरिसरं, (३) तस्माद् ब्रह्मह्रदः, (४) ततः यज्ञस्थलं, तदनु-कोटिकाख्यस्थलं (६) ततः सटीकराख्यगरुडगोविन्दस्थलं, (७) तदनन्तरं बहुलावनं (८) ततः गोकुलं, (९) शाल्मलवनं च, (१०) तदनु-साहाराख्यं, (११) ततः रहेलाख्यं, (१२) ततः सौयाश्रिकस्थलं, (१३) तदनु-गोष्ठाङ्गनवर्णनं, (१४) तदनन्तरं पूर-प्रवेशनमित्यादिकम्।

अस्मिन् देशे बहूनि दूतकाव्यानि दृश्यन्ते श्रूयन्ते च। तानि काक-दूत-पादपदूत-मनोदूत-पवनदूत-उद्धवदूत-कोकिलसन्देश - चकोरसन्देश-मेघसन्देश-हंससंदेश-कोकसन्देशादीनि। तेषु विष्णुदासेन विरचितं मनो-दूत,धोयीकविना विरचितं पवनदूतं,वादिचन्द्रेण विरचितं पवनदूतकाव्यं, माधवकवीन्द्रविरचितं उद्धवदूतं, वेदान्ताचार्यकृतः हंससन्देशः विष्णु-त्रातविरचितः काकसन्देशः एतानि दूतकाव्यानि प्रसिद्धानि।

गौड़ीयग्रन्थरत्नकोषागारेऽपि श्रीमद् रूपचरणैर्विरचिते हंसदूत उद्धव-सन्देशाख्ये इमे द्वौ दूतकाव्ये एवं श्रीकृष्णदेवसार्वभौमेन विरचितं 'पदाङ्कदूतं' श्रीनन्दकिशोरगोस्वामिना विरचितं 'शुकदूताख्यं' विशाल-दूतकाव्यं च समष्टितः चत्वारि दूतकाव्यानि विराजन्ते। इमानि सर्वाणि श्रीकृष्णरसपोषकाणि भवन्ति। एषु प्राकृतरसस्यावकाशो नास्ति।

यद्यपि कविश्रेष्ठेन कालिदासेन विरचितं प्राकृतरसवैभववर्णनपरकं 'मेघदूताख्यं' दूतकाव्यं प्राचीनतया लोकोत्तरचमत्कारकतया च रसिकैः प्रशंसितं तदपि 'प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव तत्र विभावादीनां वैरूप्यात्', "साधुकाव्यनिषेवणात्", 'न यद्वचश्चित्रपदं हरे र्यशो जग-त्पवित्रं प्रगृणीत कर्हिचित्। तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा

निरमन्त्यु शिक्षया', 'तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोक-मबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः", श्रीरुक्मिणीदेवीवाक्येऽपि–त्वक् श्मश्रु रोमनख-केशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट् कफपित्तवातम् । जीवच्छवं भजति कान्तमतिर्विमूढ़ा या ते पदाब्जमकरन्दमजिघ्रती स्त्रीति' नाना प्रमाण-बलात् तत्र प्राकृते रसं निषिध्य पुनः"रसो वै सः""रसो ह्येवायं लब्ध्वा-नन्दी भवति" "सैषानन्दस्य मीमांसा भवती"त्यारभ्य मानुषानन्दतः प्राजापत्यानन्दपर्य्यन्तं दशकृत्वा शतगुणिततया क्रमेण तेषामानन्दोत्कर्ष-परिमाणं प्रदर्श्य पुनश्च ततोऽपि शतगुणत्वेन परब्रह्मानन्दं प्रदर्श्याप्य-परितोषात् यतो वाचो निवर्त्तन्ते इत्यादिश्लोकेन तदानन्दस्यानन्त्यमेव स्थापितम्", 'नित्यरसः', 'सर्वरसः', 'अखण्डरसबोधः','सर्वरसकदम्बः', 'अखिलरसामृतमूर्त्तिः' इत्यादिनानावचनबलेन अप्राकृते भगवद्वस्तुनि एव रसत्वमन्यत्र रसाभासत्वं निश्चितम् । अतः अस्य उद्धवसन्देश-हंसदूताख्यदूतकाव्यद्वयस्य निर्माणेन रसिकान् महाविप्रलम्भमयानन्द-स्वरूपेण रसेन नित्यभगवद्रसे निमज्जयितुं ग्रन्थकारस्य महान् प्रयत्नः । तस्मात् प्राकृतनायकादिवर्णनपरात् मेघदूतात् अनयोः हंसदूतोद्धव-सन्देशयोः महद्वैशिष्ट्यम् । रसस्य 'ब्रह्मास्वादसहोदर' गर्भात् तत्तु मोक्षे पर्य्यवसानात् तस्मादनन्तगुणिते आनन्दस्वरूपे भगवद्वस्तुनि एव रसचरमत्वं न तु मेघदूतादिवर्णिततुच्छनायक-नायिकाद्यनुभ-वस्मरणकीर्त्तनादेः, प्रत्युत तत्तु पापावहत्वमेव । न तु प्राकृतनायक-नायिकाविषयमवलम्ब्य केषाञ्चित् मोक्षं स्यात् । जीवस्याणुरूपतया तमालम्ब्यानन्दास्याणुरूपेण पर्य्यवसानात्, आनन्दसागरस्य भगवतः आश्रयात् तस्य अखण्डरसास्वादनमवश्यमेव स्वीकार्य्यम् । अस्तु अस्मिन् दूतकाव्ये व्रजवासिनां विप्रलम्भमयचरममहारसवैभवविलासं दर्शयित्वा श्रीरूपपादः काव्यास्वादनचतुरान् सहृदयरसिकान् किञ्चित् किञ्चित् परिवेषयित्वा आस्वादयामास । यं प्राप्य सर्वे कृतार्था अभवन् इति अलमतिविस्तरेण ।

कृष्णदास.

# ❀ श्रीउद्धवसन्देशः ❀



सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानै-
र्लक्ष्मीवत्तां दधति मथुरापत्तने दत्तनेत्रः ।
कृष्णः क्रीड़ाभवनवड़भीमूर्ध्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीम् ॥१॥

टीका—एकस्मिन् दिवसे मथुरां गतः श्रीकृष्णः सर्व्वोद्धवमट्टालिकामारूढ़ः सन् नानाविधोपवनैः शोभितां मधुपुरीं तत्रस्थ-नानाविधजनानपि ददर्श। तद्दर्शनेन व्रजस्य एवं स्वविच्छेददावानलेन दग्धानां व्रजस्थनानाविधभक्तानां जातं यत्स्मरणं तेन व्याकुलो बभूवेत्याह सान्द्रीतिद्वाभ्याम्-क्रीडाभवनस्य आटालीतिप्रसिद्धायाः सर्व्वोद्धवर्त्ति वडभ्या मूर्ध्नि विद्योतमानः श्रीकृष्णः मथुरानगरे दत्तनेत्रः सन् सद्यस्तत्क्षण एव गोकुलारण्यसम्बन्धिमैत्रीं दध्यौ ध्यानं चकार। मथुरापत्तने कीदृशे पुष्पितानां विटपिनां वृक्षाणां सान्द्रीभूतैर्वितानैश्चन्द्रातपैः करणैः शोभावत्तां दधति ॥१॥

अनु—एक दिवस मथुरानाथ श्रीकृष्ण ने अपने केलिगृह की सर्व्वोच्च अट्टालिका पर आरोहण करके नाना प्रकार उपवनों से शोभित मथुरानगरी एवं तत्रस्थ नाना प्रकार मनुष्यों को देखा। उससे अपने विरहदावानल द्वारा दग्ध व्रजवासि नानाविध भक्तों का स्मरण हुआ तथा वे व्याकुल हो गये। उस समय आपने अपने अन्तरंग सहचर श्रीमान् उद्धवजी को दूत बनाकर व्रज के लिये भेजने का निश्चय किया। आपने उद्धव जी को निकट में बैठाकर व्रजवासियों को सान्त्वना देने के लिये जो कोमल सरस

उपदेश किया था वह उद्धवसन्देश करके कहा जाता है। भगवान् गौराङ्गदेव के परिकर वर, श्रीव्रजविपिनचर, रसिककविवर, ग्रन्थकार श्रीरूपगोस्वामीजी अब एकशत एकत्रीश श्लोक द्वारा उसका वर्णन करते हैं यथा-बिकसित नवीन वृक्षों के वन बिस्तार से परम शोभा को धारण करने वाली मथुरानगरी में दक्षनेत्र श्रीकृष्ण केलिगृह की ऊपर अट्टालिका में विराजमान होकर चञ्चल हृदय से वृन्दाबन के सौहृद का चिन्तन करने लगे ॥१॥

०००० 

श्वासोल्लासैरथ तरलितः स्थूलनालिकमालः
पूर्णां कुर्व्वन्नयनपयसां चक्रवालैः प्रणालीः ।
स्मारं स्मारं प्रणयनिबिडां बल्लवीकेलिलक्ष्मीं
दीर्घोत्कण्ठाजडिमहृदयस्तत्र चित्रायितोऽभूत् ॥२॥

टीका—तेषां बिच्छेदजन्यश्वासातिशयैस्तरलिता स्थूलकमलस्य माला यस्य स, नयनपयसां चक्रवालैः समूहैः प्रनाला इति प्रसिद्धाः प्रणालीः पूर्णाः कुर्व्वन्, तत्र वडभीमूर्ध्नि ॥२॥

अनु०—उन ब्रजजनों के विरह जनित अत्यन्त दीर्घनिःश्वासों के उल्लासों से उनके गले की स्थूल कमलमाला चञ्चलायमान हो गई तथा नयन जल के प्रवाहों से मार्ग की नालियाँ (जल निकलने का मार्ग) पूर्ण हो कर बहने लगीं। आप प्रणय से निबिड ब्रजगोपियों की बिहारशोभा का बार बार चिन्तवन करने लगे। दीर्घोत्कण्ठा से उनके हृदय निस्तब्ध हो गया तथा उस समय आप चित्र की भाँति हो गये ॥२॥

००००

अन्तःस्वान्ते क्षणमथ परामृष्य पाराभिलाषी
कष्टाम्भोधे र्भवनशिखरे कुट्टिमान्तर्निविष्टः ।

सोत्कण्ठोऽभूदभिमतकथां शंसितुं कंसभेदी
नेदिष्ठाय प्रणयलहरीबद्धवागुद्धवाय ॥३॥

टीका—कंसभेदी श्रीकृष्णः वृन्दारण्यस्मरणजनितव्याकुलचित्तोऽपि धैर्य्यमवलम्ब्य तस्य भवनस्य मूर्ध्नि चबुतरा इति प्रसिद्धस्य कुट्टिमस्य मध्ये निविष्टः सन् अन्तः स्वान्ते स्वान्तमध्ये क्षणं परामृश्य नेदिष्ठाय अन्तिकतमाय अर्थान्निकटवर्त्तिने उद्धवाय अभिमतकथां शंसितुं सोत्कण्ठोऽभूत्। कथं भूतः कष्टसमुद्रस्य पाराभिलाषी ॥३॥

अनु०—कंसनाशन आप अन्तर्मना से क्षणकाल परामर्श करके उस दुःख-समुद्र का पार होनेके इच्छुक होकर भवनके शिखर में कुट्टिम अर्थात् मणिजटित चबुतरा पर बैठ गये तथा वे निकट में उपस्थित उद्धव जी से निज हृदय की बातें कहने के लिये उत्कण्ठित हुए। उनकी बाणी प्रणयलहरियों से रुद्ध होकर गद्गद हो गई ॥३॥

◇◇◇◇

त्वं सर्वेषां मम गुणनिधे ! बान्धवानां प्रधानं
त्वद्वो मन्त्रैः श्रियमविचलां यादवाः साधयन्ति ।
इत्याश्वासादभिमतविधौ कामये त्वां नियोक्तुं
न्यस्तः साधीयसि सफलतामर्थभारः बिधत्ते ॥४॥

टीका—हि यस्मात् साधियसि अतिशयसाधुजने न्यस्तोऽर्थभारः सफलतां धत्ते ॥४॥

अनु०—आप उद्धवजी को कहने लगे, हे गुणों के सागर ! तुम मेरे समस्तबन्धुओं में प्रधान हो । तुम्हारे परामर्शों से यादवगण अचल-लक्ष्मी को प्राप्त करते हैं। इस विश्वास के कारण मैं अपने अभिमत की सिद्धि के लिए तुमको नियुक्त करने की इच्छा करता हूँ ।

क्योंकि अतिशय साधुजनों को सौंपा गया कार्य्यभार अवश्य सफल होता है ।।४।।

०००० 

संरम्भेण क्षितिपतिगिरां लम्भिते गर्वितानां
वृन्दारण्यान्मयि मधुपुरीं गान्दिनीनन्दनेन ।
बल्लव्यस्ता विरहदहनज्वालिकामण्डलीनां
अन्तर्लीनाः कथमपि सखे ! जीवितं धारयन्ति ।।५।।

टीका—गर्व्वितानां कंसगिरां संरम्भेण अत्यावेशेन हेतुना वृन्दारण्यात् सकाशात् मधुपुरीं अक्रूरेण लम्भिते प्राप्ते सति ताः कथमपि कष्टेन जीवितं धारयन्ति ।।५।।

अनु०—गान्दिनीनन्दन अक्रूर के द्वारा कंस के गर्व्वपूर्ण आदेश से मेरा वृन्दावन से मथुरा गमन होने पर वे सब व्रजसुन्दरियाँ बिरहाग्नि की ज्वालाओं में लीन होकर किसी प्रकार जीवन धारण कर रही हैं ।।५।।

०००० 

प्राणेभ्यो मे प्रणयवसतिर्मित्र ! तत्रापि राधा
धातुः सृष्टौ मधुरिमधराधारणादद्वितीया ।
वाचो युक्तिस्तवकितपदैरद्य सेयं सखीनां
गाढ़ाश्वासैर्विधुरविधुरं प्राणभारं बिभर्त्ति ।।६।।

टीका—वल्लवीषु मध्ये प्राणेभ्योऽपि प्रणयवसतिः श्रीराधा विधातुः सृष्टौ माधुर्य्यातिशयधारणादद्वितीया, सा सखीनां गाढ़ाश्वासैः करणैर्विधुरविधुरं क्लिष्टादपि क्लिष्टं प्राणभारं बिभर्त्ति । वाचो युक्त्या स्तवकितं विशिष्टपदं अक्षरं यत्र तथाभूतैः । अत्र वाचो युक्तिरित्यखण्डपदं युक्तिमात्रबोधकम् । यथा तद्वसवक्तव्ये तत्परवश इत्युच्यते ।।६।।

अनु०—हे मित्र ! वहाँ मेरे प्राणों की प्रियतमा तथा माधुर्य्यपति को धारण करने से ब्रह्मा की सृष्टि में अद्वितीया और उन ब्रज-बालाओं में श्रेष्ठा श्रीराधिका विद्यमान है। अभी भी जो सखियों के युक्तिपूर्ण बचनों वाले गाढ़ आश्वासनों से बड़ी कठिनाई से प्राणों को भार समझ कर धारण कर रही है ॥६॥

००००

गत्वा नन्दीश्वरशिखरिणो मेखलां रत्नभूतां
त्वं वल्लीभिर्वलयितनगां बल्लवाधीशपल्लीम् ।
तां दष्टाङ्गीं विरहफणिना प्राणयन् प्रीणयार्त्तां
वार्त्तामन्द्रध्वनिभिरथ मे मन्त्रिचूडापणीन्द्र ! ॥७॥

टीका—त्वं बल्लवाधीशस्य नन्दस्य पल्लीं नगरं गत्वा विरहसर्पेण दष्टाङ्गीं स्तां आर्त्तां गोपीः, मद्वार्त्तारूपमन्त्रध्वनिपाठैः प्राणयन् जीवयन् सुखय। पल्लीं कथम्भूतां नन्दीश्वरपर्व्वतस्य या मेखला नितम्बस्तस्य रत्नभूताम् ॥७॥

अनु०—हे श्रेष्ठमन्त्रिशिरोमणि ! तुम नन्दीश्वर पर्वत की रत्नमय मेखलारूप,लतापरिवेष्टित वृक्षों से युक्त,गोपराज श्रीनन्दमहाराज की नगरी में जाकर विरह सर्प से दंशित तथा परमव्याकुला उस राधा को मेरी वार्त्ता रूप गम्भीरध्वनि से जीवित करते हुए आल्हादित करो ॥७॥

००००

तिष्ठन्त्येते जगति बहवस्त्वद्विधानां विधातुं
चेतः पूर्त्तिं ननु जनपदाः मूर्त्तिभिर्मे सनाथाः ।
भूयो भूयः प्रियसख ! शपे तुभ्यमव्याजतोऽहं
भूरन्या मे हृदि सुखकरी गोष्ठतः कापि नास्ति ॥८॥

टीका—त्वद्विधानां चेतः पूर्त्तिं विधातुं कर्त्तुं मम मूर्त्या श्रीविग्रहेण सनाथाः बहवो जनपदाः देशास्तिष्ठन्ति ॥८॥

अनु०—हे प्रियसखे ! तुम्हारे सदृश बन्धुओं का चित्त प्रसन्न करने के लिए मेरी मूर्त्तियों से सनाथ अर्थात् मेरे स्वरूपों से युक्त बहुत देश विद्यमान है, परन्त मैं निष्कपट भाव से बार २ तुम्हारी शपथ खा कर कह रहा हूँ कि व्रज के अतिरिक्त हृदय सुखकारी भूमि कोई नहीं है ॥८॥

◇◇◇◇

मद्विश्लेष-ज्वलनपटली-ज्वालया जर्जराङ्गाः
सर्वे तस्मिन्निधनपदवीं शाखिनोऽप्याश्रयिष्यन् ।
गोपीनेत्रावलिविगलितै र्भूरिभिर्बाष्पवारां
पूरैस्तेषां यदि निरवधिर्नाभिषेकोऽभविष्यत् ॥९॥

टीका—तस्मिन् गोकुले सर्वे शाखिनो वृक्षाः मद्विच्छेदेन निधनपदवीं नाशावस्थां आश्रयिष्यन् यदि गोपीनां नयनजलप्रवाहैस्तेषां वृक्षाणां अभिषेको नाभविष्यत् ॥९॥

अनु०—हे सखे ! मैं अधिक क्या कह सकता हूँ । सुनो, मेरी बियोगाग्नि की ज्वालाओं से जर्जरांग होकर वहाँ के वृक्ष सब निधन पदवी को प्राप्त हो जाते अर्थात् पूर्णतः सूख गए होते, यदि गोपियों के नेत्रों से बिगलित प्रचुर अश्रु जल की धाराऐं निरन्तर उनको संसिक्त न रखती । भावार्थ-यदि गोपियों के नयनों की जल-धाराऐं उन वृक्षों को नहीं भीजाती तब वे सब अब तक सूख-मर जाते ॥९॥

◇◇◇◇

आत्मक्लेशैरपि नहि तथा मेरुतुल्यैर्व्यथन्ते
बल्लव्यस्ताः प्रियसख ! यथा मद्व्यथालेशतोऽपि ।

दुर्व्वारां मे विरहविहितां निन्हुवानस्तदार्त्ति
प्रेमग्रन्थिं त्वमतिपृथुलं तासु विख्यापयेथाः ॥१०॥

टीका—ता वल्लव्यः मेरुवत्तुङ्गैरुच्चैरात्मक्लेशैः करणैस्तथा न व्यथन्ते यथा मद्व्यथालेशतोऽपि। तासां वल्लवीनां आर्त्तिं निन्हुवानः दूरीकुर्व्वन् त्वं तासु मम प्रेमग्रन्थिं विज्ञापयेथाः ॥१०॥

अनु०—हे प्रियसखे! वे ब्रजगोपियाँ लेशमात्र मेरी व्यथा से जिस प्रकार व्यथित हृदय हो जाती हैं, सुमेरु के बराबर निज क्लेशों से उस प्रकार व्यथित नहीं होतीं। अर्थात् गोपियाँ सुमेरु के बराबर अपने दुःख को लेश मात्र नहीं गिनती हैं, परन्तु मेरे लेश मात्र दुःख को देख कर अपने हृदय में सुमेरु के बराबर क्लेश का अनुभव करती हैं। अतएव मेरी इस विरह जन्य महान् आर्त्ति को छिपाते हुए तुम अत्यन्त मोटी प्रेमग्रंथि को उन्हें अवगत कराना, अर्थात् अति सावधानी से उन्हें खबर कराना॥१०॥

००००

भ्रातर्नन्दीश्वरगिरिमितो यास्यतस्ते विदूरं
पन्था श्रीमानयमकुटिलः कथ्यते पथ्यरूपः।
प्रीये सद्यस्त्वयि निपतिते गोकुलानन्दसिन्धौ
सन्तस्तुष्टे सुहृदि हि निजां तुष्टिमेवामनन्ति ॥११॥

टीका—विदूरं यास्यतस्तव अयं श्रीमान् अकुटिलः पन्था कथ्यते। गोकुलस्थसर्वपदार्थदर्शनजन्यानन्दसिन्धौ त्वयि निपतिते सति अहं प्रीये प्रीतियुक्तो भवामि। यतः सुहृदि तुष्टे सति सन्तो जनाः निजां तुष्टिमेवामनन्ति जानन्ति ॥११॥

अनु०—हे भैया! यहाँ से अतिदूरस्थित नन्दीश्वर पर्वत को जाने के लिये सरल सुखकर मार्ग बताता हूँ। तुम उसी मार्ग में जाना

नहीं तो तुम्हारा जाने में दूर तथा विलम्ब होगा। जिस समय तुम गोकुलानन्द-समुद्र में प्राप्त होगे अर्थात् आनन्द समुद्र स्वरूप व्रज में पँहुच कर वहाँ समस्त पदार्थों के दर्शनानन्द में डूब जाओगे उसी समय हम भी यहाँ प्रसन्नता का अनुभव करेंगे, क्यों कि सन्तगण निज सुहृद् के सन्तुष्ट होने पर स्वयं भी प्रसन्न होते हैं ॥११॥

००००

अग्रे गौरीपतिमनुसरेः पत्तनान्त र्वसन्तं
गोकर्णाख्यं व्यसनजलधौ कर्णधारं नराणाम् ।
यस्याभ्यर्णे सह रविजया सङ्गमो जङ्गमानां
आविष्कुर्वन्नभिमतधुरां धीर ! सारस्वतोऽस्ति ॥१२॥

टीका—मथुरापत्तनस्यान्तर्वसन्तं गोकर्णाख्यं महादेवं त्वं अनुसरेः, यस्याभ्यर्णे निकटे रविजया यमुनया सह सारस्वतः सङ्गमः सरस्वती-सम्बन्धासङ्गमोऽस्ति। किं कुर्व्वन् तस्मिन् स्नानादिकुर्व्वतां जङ्गमानां मनुष्यादीनामभिमतस्य वाञ्छायाः धुरां भारं आविष्कुर्व्वन्, धुरश-ब्दात् अत् समासान्तस्तदुत्तरं टाप् ॥१२॥

अनु०—हे धीर ! पहले तुम नगर के मध्य में विराजमान, मनुष्यों के दुःख समुद्र के नाविक, गोकर्ण नामक गौरीपति महादेव का अनुसरण करना। जिनके निकट प्राणियों की अत्यधिक मनोभि-लाषाओं को पूर्ण करने वाला, जमुना के साथ सरस्वती का संगम विद्यमान है ॥१२॥

००००

आरूढस्ते नयनपदवीं तन्वि ! धन्यासि सोऽयं
गोपी-नम्रीकरणमुरलीकाकलीकः कलावान् ।

इत्यालापस्फुरितवदनै र्यत्र नारीकदम्बैः
दृग्भङ्गीभिः प्रथममथुरासङ्गमे चुम्बितोऽस्मि ॥१३॥

टीका—हे तन्वि ! सोऽयं कलावान् श्रीकृष्णस्तव नयनपदवीमारूढः । अतस्त्वं धन्यासीत्यालापेन स्फुरितवदनैर्नारीसमूहैर्दृग्भङ्गीभिः करणैः नन्दीश्वरादागतस्य मम मथुरया सह प्रथमसङ्गमे अहं चुम्बितोऽस्मि साभिलाषमीक्षितोऽस्मि, यत्र यमुनासरस्वतीसङ्गमे ॥१३॥

अनु०—"हे कृशांगि ! गोपियों को बिवसन करने वाली श्रीमुरली का मधुरशब्द करने वाले तथा चौषठ विद्याओं में प्रवीण वे श्रीकृष्ण तुम्हारे दृष्टिपथ में आ रहे हैं अतः तुम परम पुण्यवती हो" इस प्रकार के वार्त्तालाप से प्रसन्न मुख वाली नारीजनों के द्वारा उनके दृष्टि विभ्रम से मैं मथुरा में प्रथम प्रवेश करते समय वहाँ यमुनासरस्वती संगम स्थान में अभिनन्दित हुआ था ॥१३॥

०००००

तस्मादन्तर्विरचितपरानन्दपूरादटूरां
याहि प्रीत्या सपदि पदवीमम्बिकाकाननस्य ।
यत्रानन्दोत्सवमकरवं सर्पतः सर्पतोयात्
नन्दं विद्याधरमपि पुरा मोचयन् बल्लवीनाम् ॥१४॥

टीका—तस्मात् स्थलात् अदूरां अम्बिकावनस्य पदवीं याहि, यत्र अम्बिकावने पुरा तातं श्रीनन्दं सर्पतः सकाशात् मोचयन् एवं विद्याधरं गन्धर्वं सर्पताया: सकाशात् मोचयन् गोपीनामानन्दोत्करमहमकरवम् ॥१४॥

अनु०—शीघ्र ही तुम प्रसन्नता के साथ उस परमानन्दपूर्ण प्रदेश के समीप अम्बिकावन के मार्ग को जाना । जहाँ पर पहले मैंने कालियह्रद से आए हुए सुदर्शन विद्याधर को सर्प योनि से तथा

सर्परूप उसके मुख से पिता नन्द को छुड़ाकर गोपियों को आनन्दित किया था ॥१४॥

०००० 

भूयोभिस्त्वं किल कुवलयापीड़दन्तावघातैः
एतां निम्नोन्नतपरिसरां स्यन्दने वर्त्तमानः ।
मुञ्चोत्तुङ्गां मिहिरदुहितु र्धीर ! तीरान्तभूमिं
मन्दाक्रान्तां न खलु पदवीं साधवः शीलयन्ति ॥१५॥

टीका—हे धीर ! रथे वर्त्तमानस्त्वं उत्तुङ्गां यमुनातीरान्तभूमिं मुञ्च, यतस्तां भूमिं कुवलयापीडदन्तावघातैर्निम्नोन्नतपरिसरां, यतः साधवो जनाः मन्दया दोषेणाक्रान्तां पदवीं न शीलयन्ति ॥१५॥

अनु०—हे धीर ! रथ में बैठे हुए तुम कुवलयापीड नामक हाथी के दांतों के आघात से ऊँची-नीची यमुना की तीरभूमि को छोड़ देना। क्यों कि साधुजन मन्दजनों से आक्रान्त मार्ग का परित्याग कर देते हैं ॥१५॥

००००

मुञ्चासव्ये विहगरुचिरं किञ्चिदस्मादुदञ्चं
राजत्तीरं नवसुमनसां राजिभिस्तीर्थराजम् ।
यत्रापूर्वं किमपि कलयाञ्चक्रतुर्मत्प्रभावाद्
आभीराणां कुलमपि तथा गान्दिनीनन्दनोऽपि ॥१६॥

टीका—असव्ये दक्षिणे अस्मात् स्थलात् उदञ्चं उत्तरदिग्वर्त्तिनं अक्रूरघाट इति प्रसिद्धं तीर्थराजं मुञ्च, यत्र तीर्थराजे वरुणलोके मदैश्वर्यं दृष्ट्वा मोक्षाभिलाषवतामाभीराणां कुलं एवं गान्दिनीनन्दनोऽपि मथुरागमनसमये मत्प्रभावात् किमपि कलयाञ्चक्रतुः ॥१६॥

अनु०—अम्बिकावन के दाहिनी ओर के कुछ उत्तर भाग में अनेक पक्षियों के कूजन से मनोहर नवीन कुसुमों के समूह से शोभायमान तट वाले तीर्थराज (अक्रूरघाट) को देख कर तुम आगे बढ़ जाना। मथुरागमन समय वहाँ पर मेरे प्रभाव से वरुणलोक से मेरा ऐश्वर्य्य देखकर मोक्षाभिलाषी गोपसमाज तथा अक्रूरजी ने अपूर्व्व वैभव का अवलोकन किया था ॥१६॥

००००

यज्वानस्ते यदपि भवतो विप्रिया हेलनान्मे
नम्रस्तेषां तदपि भवनद्वाररथ्यां जिहीथाः।
गायन्तीनां मदनुचरितं तत्र विप्राङ्गनाना-
मालोकाय स्पृहयसि न चेदीक्षणैर्वञ्चितोऽसि ॥१७॥

टीका—यज्वानो याज्ञिकब्राह्मणाः यद्यपि मम हेलनात् भवतोऽप्रियास्तथापि नम्रः सन् तेषां सदनस्य द्वारवीथ्यां मच्चरितं गायन्तीनां ब्राह्मणीनामालोकाय जिहीथाः गच्छेः, चेद्यदि तासामालोकनं न स्पृहयसि तदा त्वमक्ष्णां भावैः र्जितोऽसि अज्ञो भवसीत्यर्थः ॥१७॥

अनु०—यद्यपि वहाँ वे यज्ञपरायण ब्राह्मणगण मेरी अवहेलना करने से तुम्हें प्रियकर नहीं होंगे तो भी तुम नम्र होकर उनके गृह द्वार के मार्ग में निकलना। यदि वहाँ तुम मेरे चरित्रों को गाने वाली विप्रांगनाओं को देखने के लिए इच्छुक नहीं होगे तो नैनों से वञ्चित रहोगे। अर्थात् उनके दर्शन से ही तुम्हारे नैत्र सफल होंगे ॥१७॥

००००

तद्विरूपातं स्फुटदविटपिनां मण्डलेनाभिपूर्णं
तूर्णं गच्छेरुपपुरि पुरः कोटिकाख्यं प्रदेशम्।

यत्र प्राप्ते मयि विकिरती नेत्रमुद्यानपाली
शालीनापि प्रकटितभुजामूलमल्पं जहास ॥१८॥

टीका—पुर्याः समीपमुपपुरोऽग्रे कोटराख्यं प्रदेशं त्वं गच्छेः, मालाकारस्त्री उद्यानपाली शालीना शुद्धस्वभावाऽपि मयि नेत्रं विकिरती सती प्रकटितभुजामूलं यथा स्यात्तथा अल्पं जहास ॥१८॥

अनु०—मथुरानगरी के समीप विकसितवृक्षों के समूह से युक्त उस प्रसिद्ध कोटिक (उत्तरकोटि) नामक स्थान को तुम शीघ्र ही जाना। जहाँ मेरे पहलीबार पहुँचने पर, लज्जावती होते हुए भी शुद्धस्वभावा उद्यान पालिका ने अपनी प्रणयस्निग्ध दृष्टि मुझे अर्पित की थी तथा अपने बाहुमूल को उठाकर कुछ मुस्कराई थी ॥१८॥

◇◇◇◇

इत्थं क्रान्त्वा पुरपरिसरान् याहि छत्रीकराख्यं
पट्टीभूतं भ्रमरनृपतेः पुष्पितारण्यमारात्।
श्रीदामानं सुभग ! गरुडीकृत्य यत्राधिरूढः
क्रीडाकारी दधदुरुभुजान् द्वादशाहं वसामि ॥१९॥

टीका—भ्रमरराजस्य पट्टीभूतं सिंहासनस्वरूपं, हे सुभग ! द्वादशभुजान् दधत् सन् स्वयं तत्रैव वसामि ॥१९॥

अनु—इस प्रकार नगर के आस पास के भागों को पार करके समीप में भ्रमरराजा के द्वारा अधिकृत अथवा भ्रमरराजा के सिंहासन स्वरूप तथा पुष्पितकानन वाले छत्रीकर नामक (छत्रीकरा नाम वाले) स्थान को जाना। हे मित्र ! वहाँ आजानुविलम्बित भुजाओं वाले मैंने क्रीडासक्त होकर श्रीदामा को गरुड बनाया तथा बारह दिनों तक उसके कन्धे पर वास किया ॥१९॥

◇◇◇◇

मुग्धे ! श्यामः कलयति युवा पश्य मामेव न त्वां
इत्युल्लासैरहमहमिकां सर्वतः कुर्वतीभिः ।
यानालम्बो सरलनयनालोकमैत्रीभराणां
ग्रामीणाभियुवतिभिरहं यत्र पात्रीकृतोऽस्मि ॥२०॥

टीका—हे मुग्धे ! श्यामो युवा मामेव कलयति पश्यति न त्वामित्यहमहमिकां कुर्वतीभि ग्रामस्थाभियुवतीभिः सरलनयनावलोकनेन या मैत्री तस्या भराणां अतिशयतां अहं पात्रीकृतोऽस्मि । यानालम्बी रथालम्बी ॥२०॥

अनु०—यही वह स्थान है जहाँ रथ में बैठा हुआ मैं उन ग्रामयुवतियों के मैत्रीपूर्ण सरलनयनों के अवलोकन का विषय बना था। जो यह कहती हुई कि "हे मुग्धे ! देख, यह युवा श्याम मुझे ही देख रहा है, तुझे कभी नहीं" उल्लास पूर्ण स्पर्द्धा से प्रगल्भ हो रही थीं ॥२०॥

◇◇◇◇

मुञ्चन् सव्ये बहुलबहुला-काननस्योपशल्यं
तञ्चोत्तुङ्गं ह्रदपरिसरं दक्षिणे कालियस्य ।
फुल्लाभिस्त्वं पिहितमिहिरोद्योतमन्तर्लताभिः
धीराध्वानं विमलसरसीराजिभाजं भजेथाः ॥२१॥

टीका—सव्ये वामे बहलं निबिडं यत् बहुला-काननं तस्य उपशल्यं समीपं मुञ्चन् एवं कालीयह्रदस्य उत्तुङ्गं अत्युच्चं परिसरं मुंचन् प्रकृताध्वानं भजेथाः । कीदृशं अन्तर्लताभिः पिहितमिहिरद्योतं आच्छादितसूर्यातपं, पुनः कीदृशं विमलसरस्याः श्रेणी यत्र तथाभूतम् ॥२१॥

अनु०—हे धीर ! तुम बन के बाईं ओर अनेक ग्रामों की सीमाओं को तथा दाहिनी ओर कालियह्रद के उच्च प्रदेश को छोड़ते हुए

उस मार्ग को ग्रहण करना जिसमें विकसित लताओं के द्वारा सूर्य्य का प्रकाश ढका हुआ है तथा जो निर्मल सरोवरों के समूह से शोभित है ॥२१॥

००००

वल्लीचित्रं व्रज मृगहरं तं व्रजस्योपशल्ये
कल्ये क्रीडावनविहरणोत्कण्ठया गच्छतो मे ।
यत्रोदञ्चत् कलवलयितैर्वेणुगीतैर्मृगाणां
तूर्णं राजी रजनिविरहव्याकुलानामहारि ॥२२॥

टीका—व्रजस्योपशल्ये मघेरा इति प्रसिद्धं मृगहरं तं ग्रामं व्रज, यत्र मृगहरे कल्ये प्रातःकाले वनविहरणोत्कण्ठया गच्छतो मम उदञ्चत् कलवलयितैः उच्चमधुरशब्दयुक्तैर्वेणुगीतैः कर्त्तृभिः रजन्यां विरहव्याकुलानां मृगाणां श्रेणी अहारि ॥२२॥

अनु०—व्रज के सीमाप्रान्त में लताओं से मनोहर तथा मृगों को प्रसन्न करने वाले 'मघेरा' नाम से प्रसिद्ध ( मृगहर ) उस प्रदेश में जाना । जहाँ प्रातःकाल के समय क्रीडावन में विहार के लिए उत्कण्ठित होकर मैं मधुरख से युक्त वंशी के संगीत से रात्रि में मेरे विरह से व्याकुल मृगों के समूह को आकृष्ट करता था ॥२२॥

००००

आनम्राणां हसितमुकुलैः फुल्लगण्डस्थलानां
दूराद् दृष्टिं स्फुटसुमनसां स्यन्दने मुञ्चतीनाम् ।
ते वैदग्धीपरिमलकिरो यत्र सीमन्तिनीनां
सस्रुर्बाणावलिविलसिता रुद्धलज्याः कटाक्षाः ॥२३॥

टीका: यत्र मृगहरे सीमन्तिनीनां ते कटाक्षरूपबाणाः लज्जया रुद्धलज्या अपि सस्रुः, मदभिमुखं जग्मुः । कथं भूताः बाणावलेरिव विलसितं विलासो

येषां, पुनश्च वैदग्धीरूपपरिमलकिरः, एतेन तेषां पुष्पमयबाणत्वमारोपितम् । कीदृशीनां लज्जया ईषन्नम्राणां, पुनश्च हास्य-रूपमुकुलैः सह फुल्लगण्डस्थलं यासाम् ॥२३॥

अनु०—जहाँ यौवनभार से ईषद् नम्र, मन्द मुस्कान से विकसित गण्डस्थल वाली, सुव्यक्त सुन्दर मन वाली, दूर से ही रथ पर दृष्टि डालने वाली व्रजरमणियों की विलासरूपी सुगंधि को विकीर्ण करने वाली, लक्ष पर निविष्ट बाणावलि जैसी प्रखर अपांग भंगिमाएँ मुझ पर बरस पड़ी थीं ॥२३॥

◇◇◇◇

एष श्रीमान् प्रवसति रथी माधवो राधिकायाः
प्रेमस्थूलङ्करणकुटिलालोकभङ्गी-विलासः ।
इत्यौत्सुक्याद्वरयुवतिभिः स्मारितोद्दामनर्मा
घर्माम्भोभिर्वृततनुरहं यत्र चित्रायितोऽस्मि ॥२४॥

टीका—औत्सुक्यात् एष श्रीमानित्याद्युक्तवतीभिर्वरयुवतिभिः स्मारितं राधिकाविषयकोद्दामनर्म्म यं तथाभूतोऽहं चित्रायितोऽस्मि ॥२४॥

अनु०—'अपनी कुटिल दृष्टि भंगिमा के विलास से राधा के प्रेम को बढ़ाने वाले ये श्रीमान् माधव रथ पर आसीन होकर मथुरा जा रहे हैं" इस प्रकार उत्कण्ठा से व्रज की श्रेष्ठ-युवतियों के द्वारा अपनी मनोहर लीलाओं तथा राधिका के मनोहर स्मरण कराया जाता हुआ मैं जहाँ पसीने की बूँदों से युक्त होकर चित्र लिखित सा बन गया था ॥२४॥

◇◇◇◇

लीलास्वप्नो मम विजयते यत्र नागेन्द्रभोगे
श्रीराधाङ्गीकृतपदयुगाम्भोजसंवाहनस्य ।

**तत्र क्षीराम्बुधिपरिमलस्पर्द्धने बद्धहस्ते**
**ग्रामे कामं ध्वजवति भजे अध्वविश्रामसौख्यम् ॥२५॥**

टीका—बडोथा इति प्रसिद्धे बद्ध हस्ते ध्वजयुक्ते ग्रामे त्वमध्वविश्रामसौख्यं भजेः । यत्र ग्रामे नागेन्द्रस्यानन्तस्य शरीरे मम लीलया स्वप्नः शयनं विजयते, कथंभूते क्षीरसमुद्रस्य परिमलेन सह स्पर्द्धने स्पर्द्धां कुर्व्वति, अत्र कर्त्तरि यु प्रत्ययः ॥२५॥

अनु०—जहाँ नागेन्द्रभोग ( शेषशय्या ) पर श्रीराधा के द्वारा संवाहित चरण-कमलों वाले मेरा निद्राविहार उत्कर्ष रूप से विद्यमान है । क्षीरसागर की सुगन्धि को प्रतिस्पर्द्धा करने वाले उस प्रसिद्ध ग्राम ( बडोथा ) में निश्चय ही मैंने सम्पूर्ण सुखों का उपभोग किया था और वहीं पर माता यशोदा ने मेरे हाथों को बाँधा था ॥२५॥

००००

**सोऽयं दध्नां मथननिनदाक्रान्तदिक्चक्रवालो**
**घोषस्तोषं तव जनयिता योजनद्वन्द्वचुम्बी ।**
**दिव्येनालं निखिलजगतीं सर्पिषा तर्पयन्ती**
**आतुर्भूम्ना विलसति विधेर्गोमयी यत्र सृष्टिः ॥२६॥**

टीका—योजनद्वन्द्वेन योजनद्वयेन युक्तः सोऽयं घोषस्तव तोषं जनयिता । चक्रवालं मण्डलं समूह इत्यर्थः । यत्र घोषे भूम्ना गवां बाहुल्येन विधातुर्गोमयी सृष्टिर्विलसति । अतएव सा सृष्टिः दिव्येन सर्पिषा घृतेनाखिलजगतीं तर्पयन्ती ॥२६॥

अनु०—दही मथने से उठकर समस्त दिशाओं को पूरित करने वाला तथा आठ कोस तक फैल जाने वाला वह शब्द तुम्हें आनन्द प्रदान करेगा । हे भाई ! शपथ लेना व्यर्थ है । वहाँ पर

घृतों से समस्त जगत को तृप्त करती हुई विधाता की प्रचुर गो-सृष्टि विलास कर रही है ॥२६॥

◇◇◇◇

कक्षां लक्षावधिभिरभितः कासरीभिः परीतां
तां सन्नद्धव्रजविजयिनीं शाल्मलाख्यां भजेथाः ।
वीथ्यां वीथ्यां पृथुकनिकरा यत्र मित्रानुवेलं
खेलन्तस्ताननु-विदधते विक्रमान् मे क्रमेण ॥२७॥

टीका—सन्नन्दस्य व्रजविजयिनीं साहार इति प्रसिद्धां शाल्मलाख्यां शिशनो इति ख्यातां कक्षां प्रदेशं त्वं भजेथाः, कथंभूतं कासरीभिर्महिषीभिः परीतां व्याप्ताम्, हे मित्र पृथुकनिकरा बालकसमूहाः अनुवेलं निरन्तरं खेलन्तः मम विक्रमान् गोवर्द्धनोद्धरणादि-विहारान् अनुविदधते अनुकरणं कुर्व्वन्ति ॥२७॥

अनु०—हे मित्र ! चारों ओर अनेक महिषियों से परिव्याप्त तथा हर्षयुक्त गोकुलवासियों के विजय साधक उस शाल्मल ( साहार ) नामक विभाग का तुम अवलोकन करना जहाँ प्रत्येक गली में क्रीडा करते हुए बालकों के समूह हर समय मेरे उन विक्रमशाली गोवर्द्धन धारणादि कर्मों का अनुकरण कर रहे होंगे ॥२७॥

◇◇◇◇

दूरादेष प्रणयति पुरा लब्धसाहारनामा
प्रेमानन्दं तव नयनयोरौपनन्दो निवासः ।
जङ्घालेन क्षितिपतिपुरीं स्यन्दनेनानुविन्दन्
यत्राहारं प्रियमकरवं हारि हैयङ्गवीनम् ॥२८॥

टीका—उपनन्दस्य निवासः साहार नामा ग्रामः तव नयनयोरानन्दं

अगायति, वर्त्तमानसामीप्ये वर्त्तमानप्रयोगः । जंघालेन वेगवत्तरेण अतिशयवेगयुक्तेन स्यन्दनेन मधुपुरीं विन्दन् हैयङ्गवीनं आहारमकरवम् ॥२८॥

अनु०—दूर से ही महाराज उपनन्द का वह साहार नामक निवास तुम्हारे नेत्रों को प्रेमानन्द से आप्लावित कर देगा । जहाँ वेगवान रथ में बैठ कर मथुरानगरी को आते समय मैंने मनोहर मक्खन का आहार किया था ॥२८॥

००००

गोपेन्द्रस्य व्रज परिसरे लब्धतुष्टिर्लभेथाः
तां विख्यातां कलितमहिलाचारुहेलां रहेलाम् ।
यामासाद्य प्रहितमुरलीकाकलीदूतिकोऽहं
सायं गोपीकुलमकरवं सामि नेपथ्यनद्धम् ॥२९॥

टीका—रहेरा इति प्रसिद्धां रहेलां त्वं लब्धभक्तिः सन् लभेथाः, कथम्भूतां महिलाभि र्व्रजसुन्दरीभिः कलिता कृता चारुहेला शृङ्गारजन्यक्रिया यत्र, सायंकाले मुरलीशब्देन सामि नेपथ्येन अर्द्धवेशेन नद्धं अर्थात्युक्तं गोपीकुलमहमकरवम् ॥२९॥

अनु०—व्रज के परिसर में प्रसन्नता का अनुभव करके तुम गोपियाँ के मनोज्ञ शृंगार सम्बन्धी बिलास वाले उस प्रसिद्ध स्थान (रहेरा) पर जाना, जहाँ पहुँच कर संध्या के समय मैं अपने मुरली वादन रूपी दूती का उपयोग करता था और उसको सुन कर समस्त गोपियाँ अर्ध सुसज्जित हुई ही दौड़ पड़ती थीं ॥२९॥

००००

यत्र प्रीतानहमकरवं मित्रभावेन शाखान्
हारं हारं विदितसमयो बल्लवीनां दधीनि ।

शाखिव्रातः स खलु वलितः प्रीतशावाभिधस्ते
देशः क्लेशं पथिषु रथिनो दारयिष्यत्युदारम् ॥३०॥

टीका—पिसाईति प्रसिद्धः प्रीतशावाभिधो ग्रामः तव उदारं क्लेशं दारयिष्यति। यत्र ग्रामे विदितदधिचौर्य्यसमयोऽहं गोपीनां दधीनि हारं हृत्वा शावान् प्रीतान् अकरवम् ॥३०॥

अनु०-दधिमन्थन के समयसे परिचित हुआ जहाँ मैं गोपियोंके दही का बार बार हरण करके बालकों को मित्र भाव से प्रसन्न करता था। प्रफुल्लित वृक्षसमूह से युक्त वह प्रीतशाव(पीसाई)नामक स्थान निश्चय ही मार्ग में रथ पर गमनकारी तुम्हारे महान क्लेश को हार नष्ट कर देगा ॥३०॥

००००

सोऽयं रम्भानटनचटुलैः सेव्यमानो मरुद्भिः
कम्राशोकोत्तमसुमरसां निर्भरामोदधारी।
पीयूषेण स्फुरितवसतिस्त्वामुदञ्चद्गुरुश्रीः
लोकातीतः किल मदयिता बल्लवेन्द्रस्य लोकः ॥३१॥

टीका—बल्लवेन्द्रस्य लोको नन्दीश्वरस्त्वां मदयिता हर्षयुक्तं करिष्यतीत्यर्थः। रम्भानटनेति वायोर्मान्द्यमानीतम्। कम्रः कमनीयो योऽशोकः, पीयूषेण स्फुरित इव वसति यस्य तथाभूतो लोक इत्यर्थः ॥३१॥

अनु०—कदलीवृक्षों को नचाने में चंचल वायुओं द्वारा सेवित, अशोक के कमनीय पुष्पों की सौरभ से सुवासित, अमृतमयी बस्तियों वाला, अत्यन्त बढ़ी चढ़ी शोभा वाला महाराज नन्द का वह अलौकिक नगर तुम्हें अवश्य ही हर्षित करेगा ॥३१॥

००००

पश्यन्तीनां चकितचकितं लब्धसङ्गं रथाङ्गे
मामुत्तुङ्गव्यसनविसरैः काममुन्मादितानाम् ।
तासां विद्युत्तरलवपुषां बल्लवीनां प्रपातात्
विद्युत्कारीं कथयति जनो दक्षिणां यस्य कक्षाम् ॥३२॥

टीका—यस्य नन्दीश्वरस्य दक्षिणां कक्षां प्रदेशं विद्युदिव तरलवपुषां व्रजसुन्दरीणां प्रपाताद्धेतो जनः विद्युत्कारी इति ख्यातां विद्युत्कारीं कथयति । कथंभूतानां रथाङ्गे रथे लब्धसङ्गं मां चकित-चकितं यथा स्यात्तथा पश्यन्तीनां पुनश्च उत्तुङ्गव्यसनस्य विसरैः समूहैरुन्मादितानाम् ॥३२॥

उसके दक्षिणी भाग को मनुष्य आज भी विद्युत्कारी नाम से पुकारते हैं, क्योंकि रथ के ऊपर बैठ कर क्रीडा करने वाले मुझ को चकित होकर देखने वाली तथा दुःख के आधिक्य के कारण उन्मादित बनी हुई एवं विद्युत के समान चंचल शरीर वाली वे गोपियाँ वहाँ मूर्च्छित होकर गिर गई थीं। आज कल भी इस स्थान का नाम बीजवारी है और यह नन्दग्राम के दक्षिण में है ॥३२॥

০০০০

यत्राक्रूरः प्रणयनिबिडोत्कण्ठया कुण्ठितात्मा
रङ्गं गोष्ठाङ्गणमनुसरन् मामलोकिष्ट बन्धुम् ।
तद्बाष्पाम्भः कुलपरिचयारब्धजृम्भैः कदम्बैः
सा संवीता बिलसति तटी यत्र सौयात्रिकाख्या ॥३३॥

टीका—यत्र नन्दीश्वरे सौयात्रिकाख्या तटी बिलसति, यत्र तटयां अक्रूरः रंगात् कौतुकात् गोष्ठमनुसरन् बन्धुं मामलोकिष्ट । तटी कथंभूता अस्य अक्रूरस्य यो बाष्पाम्भः समूहस्तस्य परिचयेन योगेनार्थात्सेकेन आरब्धजृम्भैः प्राप्तप्रकाशैः कदम्बैः संवीता व्याप्ता ॥३३॥

अनु०—जहाँ विविड़ प्रणय में उत्कण्ठित हुए अथच श्रीकृष्ण को राज से ले जाऊँगा इस विचार से हृदय में संकुचित हुए तथा गोष्ठ अंगण में जाते हुए अक्रूर ने मुक्त सुहृद को देखा था। जहाँ उन अक्रूर के आनन्द जनित आँसुओं से बिकसित होने वालें कदम्बों से परिवेष्टित वह सौयात्रिक नामक तटभूमि सुशोभित है ॥२३॥

००००

धावद्बालाबलिकरतलप्रोच्चलद्बालधीनां
यत्रोत्तुङ्गस्फटिकपटलस्पर्द्धिदेहद्युतीनाम् ।
घ्रायं घ्रायं नवतृणशिखां मुञ्चतीनां बलन्ते
वत्सालीनां चटुलचटुलं शश्वदाढौकनानि ॥२४॥

टीका—यत्र नन्दीश्वरे वत्सश्रेणीनां चञ्चलादपि चञ्चलं यथा स्यात्तथा शश्वत् आढौकनानि कुर्द्दनानि वलन्ते। कथंभूतानां धावद्बालकश्रेणीनां करतलप्रोच्छलत्वात्बधि लाङ्गूलः यासां पुनश्च नवतृणानां शिखां अग्रभागं घ्रायं घ्रायं मुञ्चतीनाम् ॥२४॥

अनु०—जहाँ उन्नत स्फटिक समूह के समान शरीर की कान्तिवाले पीछे दौड़ते हुए बालकों के हाथों से पूँछ निकल जाने के कारण अत्यन्त हर्ष से भागने वाले तथा नवीनतृणों के अग्रभाग को सूँघ कर छोड़ देने वाले गोवत्सों की अत्यन्त चंचल चौकड़ी (गतियाँ) शोभायमान हैं ॥२४॥

००००

आभीरीणां नयनसरणीसङ्गमादेव तासां
सद्यो मोदायितमधुरिमोल्लासभङ्गी बिधाता ।

पीठीभूतो मम परिमलोद्गारगोष्ठीगरीयान्
यत्रास्थानीमनु विजयते पाण्डरो गण्डशैलः॥३५॥

टीका—यत्र नन्दीश्वरे आस्थानीमनु आस्थान्यां पाण्डुरो गण्डशैलः श्वेतप्रस्तरखण्डो विजयते। कथंभूतः आभीरीणां नयनपथसङ्गमादेव सद्यस्तत्क्षणे मोट्टायितस्य अभिलाषप्राकट्यरूपभावविशेषस्य माधुर्य्योल्लासभङ्गी कर्त्ता, तथा च तादृश गण्डशैलस्य दर्शनादेव तासां मोट्टायितभावस्योदयो जात इत्यर्थः, पुनश्च मम पीठीभूतः, पुनश्च परिमलोद्गारस्य गोष्ठी समूहेन गरीयान् अतिसुगन्ध इत्यर्थः॥३५॥

अनु०—जहाँ गोष्ठसमाज के पीछे, गोपांगनाओं के नयन कटाक्ष के सम्पर्क से उन्हीं के मोट्टायित नामक भाव की मधुरिमा से विलास को उत्पन्न करने वाला, मेरा पीठासन स्वरूप तथा सौरभ के विस्तार का अक्षय भाण्डार वह श्वेत गण्डशैल शोभायमान है॥३५॥

○○○○

रेणुर्नायं प्रसरति गवां धूमधारा कृशानोः
वेणुर्नासौ गहनकुहरे कीचको रौरवीति।
पश्योन्मत्ते! रविरभिययौ नाधुनापि प्रतीचीं
मा चाञ्चल्यं कलय कुचयोः पत्रवल्लीं तनोमि॥३६॥

टीका—यत्र कुवलयदृशां प्रेमपूर्णजल्पः पुरा आसीदिति द्वादश श्लोकैरन्वयः। तासां प्रेमजल्पमेवाह—काचित्सखी वनात् कृष्णस्य गोष्ठागमनं संभाव्योत्कण्ठया व्याकुलां स्वयूथेश्वरीमाह रेणुरिति। गवां रेणुः धूली न प्रसरति किन्तु कृशानोरग्ने धूमधारा॥३६॥

अनु०—इसके आगे बारह श्लोकों के कुलकमें ब्रजयुवतियों का मधुरालाप वर्णित है। एक सखी वन से श्रीकृष्णका गोष्ठागमन की

सम्भावना करती हुई व्याकुला अपनी सखी यूथेश्वरी से कह रही है:-हे उन्मत्ते ! देख, यह गोधूलि नहीं है वरन अग्नि की धूम्र-रेखा है । यह वेणु की स्वरलहरी नहीं है वरन् वन में कीचक नामक बाँस का शब्द है । अभी तो सूर्य्य भी पश्चिम दिशा को नहीं गए हैं । तुम इस प्रकार उत्कण्ठित क्यों हो रही हो । मैं अभी तुम्हारे कुचों पर पत्रावली बनाती हूँ ॥२६॥

००००

दूरे वंशीध्वनिरुदयते हन्त मा धाव तावत्
धूम्रे दानीमपि नहि गवां लक्ष्यते धूलिरेखा ।
अस्ति द्वारे गुरुरपि ततो लम्बितां स्तम्भयन्ती
चीवे ! नीवीं त्वमिह तरसा याहि गेहान्तरालम् ॥२७॥

टीका—द्वारे गुरुजनोऽस्ति ततो हेतोः हे क्षीवे मत्ते लम्बितां स्तम्भयन्ती त्वं गृहमध्ये याहि ॥२७॥

अनु०—वंशी का शब्द बहुत दूर सुनाई दे रहा है, हाय ! तुम इस प्रकार मत भागो । अभी तक भी गायों की धूम्रवर्णीया धूलिरेखा नहीं दीख रही है । हे उन्मत्ते ! द्वार पर गुरुजन विद्यमान हैं । अतः तुम गिरते हुए वस्त्र को सँभाल कर गृह के मध्य में शीघ्र जाओ ॥२७॥

००००

आप्रत्युषादपि सुमनसां त्रिथिभि ग्रंथ्यमाना
घत्ते नासौ सखि ! कथमहो वैजयन्ती समाप्तिम् ।
धिन्वन् गोपीनयनशिखिनो व्योमकक्षां जगाहे
सोऽयं मुग्धे ! निबिड़धवलो धूलिचक्राम्बुवाहः ॥२८॥

टीका—प्रत्यूषमारभ्य सुमनसां श्रेणिभिग्रंथ्यमाना वैजयन्ती अधुनाऽपि समाप्तिं न धत्ते । हे मुग्धे ! निविडधवला धूलिसमूहरूपो मेघः गोपीनां नयनरूपमयूरान् सुखयन् व्योमकक्षामाकाशप्रदेशं जगाहे । मालारचनां विहाय श्रीकृष्णदर्शनार्थं शीघ्रमागच्छेति भावः । ३८ ।

अनु०—हे सखि ! बड़े आश्चर्य्य की बात है कि प्रातःकाल से ही पुष्पों से गूँथी जाती हुई यह माला किस कारण से अभी तक पूरी नहीं हो पाई है । हे मुग्धे ! देख गोपियों की नयनाग्नि को शान्त करता हुआ अथवा (नयनरूप मयूरों को तृप्त) यह अत्यन्त श्वेत गोधूलिरूपी मेघ आकाश में छा गया है अतः माला रचना को छोड़कर श्रीकृष्ण दर्शन के लिये शीघ्र आओ यह भावार्थहै॥३८॥

००००

अस्मिन्भूयो विसृमरवपुः सौरभे सौरभेयी-
धूलेर्जालैः शबलितशिरोमालती-चक्रवाले ।
अन्तर्गोष्ठं प्रविशति हरौ हन्त कस्या न चेतः
तृष्णां धत्ते जरति ! मुखरे ! किं वृथा रारटीसि ॥३९॥

टीका—अन्या श्वश्रूं प्रत्याह-प्रसरणशीलो वपुः सौरभो यस्य तस्मिन् श्रीकृष्णे गोष्ठमध्ये प्रविशति सति कस्याः श्चेतः तृष्णां न धत्ते अतस्त्वं वृथा किं रारटीसि । कृष्णं मा पश्येति पुनः पुनर्वदसि । कृष्णे कीदृशे सुरभीसम्बन्धिधूलिसमूहैः शबलितं युक्तं शिरस्थमालतीपुष्पाणां चक्रवालं मण्डलं यस्य ।।३९।।

अनु०—कटु वचन बोलने वाली वृद्धा के प्रति एक गोपि का वचन-हे वृद्धे ! हे वाचाले ! तुम व्यर्थ ही क्यों कटुवचन कह रही हो । अपने शरीर की सुगन्धि को चारों ओर विकीर्ण करने वाले तथा गायों की पदरज से शबलित सुन्दर बनी हुई मालती-

माला वाले कृष्ण के गोष्ठ में प्रविष्ट हो जाने पर किस का चित्त उत्कण्ठित नहीं होता, अर्थात् सभी का होता है ॥३९॥

◇◇◇◇

मा मन्दाक्षं कुरु गुरुजनाद् देहलीं गेहमध्यात्
एहि क्लान्ता दिवसमखिलं हन्त विश्लेषितोऽसि ।
एष स्मेरो मिलति मृदुले ! बल्लवीचित्तहारी
हारी गुञ्जावलिभिरलिभि लींढगन्धो मुकुन्दः ॥४०॥

टीका—हे सखि ! गुरुजनात् मन्दाक्षं लज्जां मा कुरु । किन्तु गेह-मध्यात् देहलीं एहि । यतोऽखिलं दिवसं व्याप्य विरहेण क्लान्तासि । हे मृदुले विलम्बं मा कुरु, यतो गुञ्जावलिभि हारी एष श्रीकृष्णो मिलति ॥४०॥

अनु०—हे सखि ! गुरुजनों से लज्जा न करो । घर के बीच से द्वार प्रदेश को आओ । हाय ! वियोग के कारण तुम दिन भर क्लान्ता रही । हे मृदुले ! देख, मन्दमुस्कान वाले गोपांगनाओं के चित्त को हरने वाले, गुंजाओं की माला वाले तथा सुगंधि के कारण भ्रमरों से आवेष्टित ये मुकुन्द आ रहे हैं ॥४०॥

◇◇◇◇

शौरिर्गोष्ठाङ्गणमनुसरन् सिञ्जितैरेव मुग्धः
किङ्किण्यास्ते परिहर दृशोस्ताण्डवं मण्डिताङ्गि ! ।
आराद्गीतैः कलपरिमिलन्माधुरीकैः कुरङ्गे
लब्धे सद्यः सखि ! विवशतां वागुरां कस्तनोति ।४१।

टीका—गोष्ठांगनमनुसरन् कृष्णस्तव किङ्किण्याः सिञ्जितैरेव मुग्धः अत दृशोर्नृत्यं कटाक्षं परित्यज । न जाने तादृशनृत्यदर्शनेन कृष्णस्य का दशा भविष्यतीति भावः । कलस्य सर्वतो भावेन मिलन्ती माधुरी

यत्र, एवंभूतैर्गीतैः कुरङ्गे विवशतां लब्धे सति कः खलु वागुरां मृग-बन्धनीं तनोति ? ॥४१॥

अनु०—हे भूषितांगि ! गोष्ठांगण में आते हुए श्रीकृष्ण तुम्हारी किंकिणी के मनोहर शब्दों से ही मोहित हो रहे हैं। तुम नयन-नर्त्तन मत करो अर्थात् कटाक्ष निक्षेप से उन्हें और भी अधिक व्याकुल मत बनाओ। हे सखि ! मधुर स्वर विशेष के माधुर्य्य वाले गीतों से मृग के शीघ्र ही बश में हो जाने पर ऐसा कौन होगा जो जाल को फैलाना उचित समझेगा ॥४१॥

००००

यान्त्या लीलोद्भटकलतुलाकोटि-सद्यस्त्वयासौ
लब्धा चन्द्रावलि ! सखि ! कुतः शब्दभेदाख्यविद्या ।
पश्योपेन्द्रः सदनपदवीं बल्लवेन्द्रस्य मुञ्चन्
अन्तर्भिन्नो मुहुरिह यया सम्भ्रमाद्बंभ्रमीति ॥४२॥

टीका—लीलया उद्भटकलयुक्त तुलाकोटि नूपुरो यत्र, तद् यथा स्यात्तथा यान्त्या त्वया कुतः सकाशात् शब्दभेधाख्या विद्या लब्धा शब्द-मात्रेणैव या लक्ष्यं विद्धं करोति सा शब्दभेधविद्या, यया नूपुरशब्दरूप-विद्यया अन्तर्भिन्नः श्रीकृष्णो घूर्णायमानः सन् ब्रजेन्द्रस्य सदनं गन्तुं या प्रकृता पदवी तां मुञ्चन् त्यजन् यत्र कुत्रचित् संभ्रमात् बंभ्रमीति पुनः पुनर्भ्रमिं प्राप्नोति ॥४२॥

अनु०—हे सखि चन्द्राबलि ! बिलास से अत्यन्त मधुरशब्द करने वाले इस नूपुर को पहिन कर जाने वाली तुमने यह शब्दभेदाख्य-विद्या (शब्द प्रयोग से लक्ष का भेदन करने वाली) कहाँ से सीख ली ? देख ! इस शब्द भेदाख्य-विद्या से हृदय में बिंधे हुए श्री-कृष्ण भ्रमाकान्त से नन्द के गृह मार्ग को छोड़ कर बार बार यहीं गोष्ठ में कातर होकर घूम रहे हैं ॥४२॥

००००

श्वासोत्कम्पं वसति वसते वत्सला द्वारि देवी
वल्लीस्तोमैः क्षणमिह मुखाम्भोजलक्ष्मीं पिधेहि।
दूराच्चेतोमणिमपहरन्नेष भव्याङ्गि ! दिव्यो
विब्बोकस्ते मुरविजयिनो वर्त्मपातो बभूव ॥४३॥
यष्टिर्भूमौ लुठति तरसा स्रंसते पश्य वंशो
कंसारातेः स्खलनममलं शृङ्गमङ्गीकरोति।
दूरान्नन्दः कलयति पुरो ह्रेपयामुं न राधे !
वन्दे देवि ! स्थगय चपलापाङ्ग-भङ्गीवितानम् ॥४४॥

टीका—सा देवी यशोदा वसते द्वारि कृष्णदर्शने सोत्कण्ठं यथा स्यात्तथा वसति, अतः मुखाम्भोजशोभां क्षणां पिधेहि यतस्तव विब्बोकः गर्वमानाभ्यां इष्टे अनादररूपभावविशेषः दूरादेव मुरविजयिनः श्रीकृष्णस्य चित्तरूपमणिमपहरन् वाटपड इति प्रसिद्धो वर्त्मपाती बभूव ॥४३-४४॥

अनु०—हे भव्यांगि ! प्रेमवती अर्थात् उत्कण्ठिता देवी यशोदा गृह के द्वार पर खड़े हैं। सत्वोद्रेक के कारण उनके श्वास लम्बे तथा शरीर कम्पयुक्त है। तुम लतापुंजों में अपने शरीर को छिपा कर मुखकमल की शोभा को क्षण भर के लिए श्रीकृष्ण को मत दिखाओ। दूर से ही चित्त रूप मणि को हरण करने वाला तुम्हारा यह अत्यन्त मनोहर विब्बोकभाव श्रीकृष्ण के लिए बटमार हो रहा है ॥४३॥

अनु०—हे राधे ! देख ! कंसारि श्रीकृष्ण की हस्तयष्टि पृथ्वी पर गिर गई है। वंशी हाथों से छूटती जा रही है। पवित्र सींगा भी स्खलित हो रहा है। नन्द भी दूर से देख रहे हैं। अतः तुम आगे श्रीकृष्ण को इस प्रकार लज्जित मत करो। हे देवि ! तुम्हारी वन्दना करती हूँ, तुम अपांगों की चंचल भंगिमाओं को बन्द कर दो

अर्थात् तुम श्रीकृष्ण पर इस प्रकार चंचल कटाक्षपात मत करो ॥४४॥

००००

तिष्ठन् गोष्ठाङ्गणभुवि मुहु र्लोचनान्तं विधत्ते
जातोत्कण्ठस्तव सखि ! हरिर्देहलीवेदिकायाम् ।
मिथ्यामानोन्नतकवलिते ! किं गवाक्षार्पिताक्षी
स्वान्तं हन्त ग्लपयसि बहिः प्रीणय प्राणनाथम् ॥४५॥

टीका—हे सखि ! तव देहलीवेदिकायां हरिरुत्कण्ठः सन् लोचनान्तं विधत्ते । हे मिथ्यामानस्य उन्नत्या कवलिते ग्रस्ते त्वं गवाक्षार्पिताक्षी सती किं स्वान्तं मनः ग्लपयसि,तस्माद्बहिरागत्य प्राणनाथं सुखय॥४५॥

अनु०—हे सखि ! तुम्हारे दर्शन के लिये अत्यन्त उत्सुक श्रीहरि गोष्ठांगण में खड़े होकर तुम्हारे द्वार की देहली पर बार बार दृष्टि डाल रहे हैं। हे वृथा मानगर्व्विते ! गवाक्ष में अपने नेत्रों को लगा कर तुम व्यर्थ ही अपने मन को क्यों दुःखी कर रही हो। बाहर आकर प्राणवल्लभ को प्रसन्न करो ॥४५॥

००००

पश्य व्रीडां सकपटमसौ तन्वती नः पुरस्तात्
द्वारे गौरी न सरति मुहुः शौरिणाकारिताऽपि ।
आकृष्टाया गहनकुहरे वेणुविद्या विनोदैः
जानात्यस्याः पुनरनुपमं विक्रमं कुञ्जवीथी ॥४६॥

टीका—काचित् स्वसख्याः कपटलज्जां अन्यां प्रत्याह-नोऽस्माकं पुरस्ताद् व्रीडां सकपटं तन्वती इयं गौरी शौरिणा नेत्रद्वारा मुहुराकारितापि आहूताऽपि गृहस्य द्वारे न निःसरति किंतु वेणुना आकृष्टाया अस्याः अनुपमं लज्जाविक्रमं कुञ्जवीथी एव जानाति ॥४६॥

अनु०—एक सखी अपनी सखी के विकारों का अन्य से वर्णन कर रही है यथा "हे सखि! देख, यह गौरी बार बार श्रीकृष्ण के द्वारा दृग्भंगिमा से बुलाई जाती हुई भी हम सब के आगे कपट लज्जा को दिखाती हुई द्वार पर नहीं आ रही है, किंतु वंशी की स्वरलहरी से आकृष्ट होकर कानन मध्य में जाने वाली इसके अनुपम पराक्रम (धीरता) को निकुंज श्रेणियाँ बहुत अच्छी तरह जानती हैं" अर्थात् श्रीकृष्ण द्वारा वंशीवादन करने पर यह अपने धैर्य को तिलांजलि देकर अवश्य कुंजवीथियों में पहुँच जाती है ॥४६॥

००००

इत्थं साचिस्मितरुचिभृतां यत्र सन्ध्यानुबन्धे
मामुद्दिश्य स्मरपरिमलं बिभ्रतीनामदभ्रम् ।
पीनः पुन्याद्विविधहृदयोत्तुङ्गभावानुषङ्गी
लीलाजल्पः कुवलयदृशां प्रेमपूर्णः पुरासीत् ॥४७॥

( द्वादशभिः कुलकम् )

टीका—इत्थं अनेन प्रकारेण वक्रस्मितकान्तिभृतां कुवलयदृशां प्रेमपूर्णः लीलाजल्पः यत्र पुरा आसीत् । अदभ्रं अनल्पं यथा स्यात्तथा स्मरपरिमलं बिभ्रतीनाम् ॥४७॥

अनु०—जहाँ सन्ध्या के समय मुझको लक्ष्य बनाकर कुटिल मन्द हास्य से कान्ति को धारण करने वाली, उद्दाम काम-सौरभ से युक्त, नीलकमल तुल्य नेत्रों वाली व्रजांगनाओं के हृदय की स्मरपरिमल युक्त विविधभावनाओं को बार बार प्रकट करने वाला इस प्रकार का प्रेमपूर्ण आलाप विलास पहले हुआ करता था ॥४७॥

००००

दामाकृष्टिद्विगुणितकराचद्यविद्योतितानां
घर्म्माम्भोभि र्दरबलयितस्मेरगण्डस्थलानाम् ।
भालोपान्तप्रचलदलकश्रेणिभाजां मदीयैः
कीर्त्तिस्तोमै र्मुखरितमुखाम्भोजलक्ष्मीभराणाम् ॥४८॥
हेलोदञ्चद्वलयरणितग्रन्थितैर्मन्थनीनां
ध्वानोन्मिश्रैर्मसृणमसृणं मथ्नतीनां दधीनि ।
गीतैस्तासां कुवलयदृशां यत्र रात्रे विरामे
प्रेमोत्तानै र्मम समजनि स्वप्नलीलासमाप्तिः ॥४९॥

टीका—यत्र नन्दीश्वरे रात्रे विरामे अर्थात् प्रभाते दधीनि मसृणमसृणं कोमलादपि कोमलं यथा स्यात्तथा मथ्नतीनां कुवलयदृशां प्रेमोत्तानै-र्गीतैः करणैर्मम स्वप्नलीला समाप्ति र्जागरणं समजनि इति परश्लोके-नान्वयः । कीदृशीनां मदीयैः कीर्त्तिसमूहैर्मुखरितानि यानि मुखाम्भो-जानि तेषां लक्ष्मीभरो शोभातिशयो यासाम् ॥४८॥

टीका—गीतैः कीदृशैः हेला अनायासचेष्टा तया उदञ्चता उद्गच्छता वलयशब्दैर्ग्रथितैः ॥४९॥

अनु०—जिस गोकुल में रात्रि समाप्त होने पर मंथन की रस्सी के खींचने से प्रसारित और संकुचित हस्तों से शोभाशाली, पसीने की बूंदों से युक्त प्रफुल्ल गंडस्थलों वाली, ललाट पर फैले हुए चूर्ण कुन्तलों वाली, मेरी कीर्त्तियों के उच्चारण से मुखरित मुखकमल शोभाशाली, धीरे धीरे दही मथने वाली उन नील कमल के समान नेत्रों वाली गोपियों के विलास से हिलते हुए बलयों के रणनशब्द से युक्त तथा मंथनदण्डों के शब्द से मिश्रित प्रेमपूर्ण गीतों से मेरी मधुरनिद्रा टूटा करती थी ॥४८॥४९॥

००००

निर्माय त्वं चित्र फलकं हारि कंसारिमूर्त्या
वारं वारं दिशसि यदि मां माननिर्वाहणाय ।
यत्पश्यन्ती भवनकुहरे रुद्धकर्णान्तराहं
साहङ्कारा प्रियसखि ! सुखं यापयिष्यामि यामम् ॥५०॥

टीका—काचित् यूथेश्वरी मानशिक्षाकारिणीं स्वसखीमाह—हे सुमुखि ! मानकरणाय मां यदि वारं वारं दिशसि कथयसि तदा कृष्णमूर्त्याः फलकं चित्रपटं निर्माय मह्यं देहि । यत्फलकं भवनकुहरे स्थित्वा पश्यन्ती अहं वेणुशब्दभयात् रुद्धकर्णा सती मुहूर्त्तं यापयिष्ये किन्तु मुहूर्त्तादूर्द्ध्वं न शक्नोमीति ध्वनिः ॥५०॥

अनु०—कोई यूथेश्वरी मान सिखाने वाली अपनी सखी से कहती है हे सखि ! यदि तुम बार बार मुझे मान का निर्बाह करने के लिए उपदेश देती हो तो चित्रपट पर कृष्ण का सुन्दर चित्र बनाकर मुझे दो । जिस से बियोग में भी मैं उनका दर्शन लाभ कर सकूँ । उसको देखती हुई मैं अपने कानों को बन्द करके मान गर्ब्बिता होकर गृहमध्य में थोड़ी देर रह सकूँगी । [कानों को बन्द करने का तात्पर्य्य उनकी बंशीध्वनि न सुनने से है, क्योंकि उसके सुनने पर तो मान का गर्व नष्ट हो जाना अवश्यम्भावी है] ॥५०॥

०००० 

सन्ति स्फीता ब्रजयुवतयस्त्वद्विनोदानुकूला
रागिण्यग्रे मम सहचरी न त्वया घट्टनीया ।
दृष्ट्वाभ्यर्णे शठकुलगुरुं त्वां कटाक्षार्द्धचन्द्रान्
भ्रूकोदण्डे घटयति जवात् पश्य संरम्भिणीयम् ॥५१॥

टीका—स्फीताः श्रेष्ठाः, किंतु ममाग्रे मम सहचरी रागिणी क्रोधवती

पक्षे—अनुरागवती, त्वया न घट्टनीया न चालनीया जवात् वेगात् संरम्भिणी कोपना ॥५१॥

अनु०—वहाँ एक गोपिका ने मुझ से एक दिन कहा था-हे कृष्ण ! तुम्हारे विनोद के योग्य बहुत सी ब्रजयुबतियाँ हैं, परन्तु अब तुम भविष्य में अनुरागबती मेरी सखी राधिका को कुपित न करना। देखो यह कोपना शठराज तुमको समीप देख कर अपने भ्रू रूपी धनुष पर कटाक्षरूपी अर्द्ध चन्द्रनामक बाण चढ़ा रही है ॥५१॥

००००

मा भूयस्त्वं वद रविसुतातीरधूर्त्तस्य वार्त्तां
गन्तव्या मे न खलु तरले ! दूति ! सीमापि तस्य ।
विख्याताहं जगति कठिना यत् पिधत्ते मदङ्गं
रोमाञ्चोऽयं सपदि पवनो हैमनस्तत्र हेतुः ॥५२॥

टीका—श्रीकृष्णप्रसङ्गेन दैवादुद्गतं रोमाञ्चं काचित् मानिनी अवहित्थया संगोपयति । अयं मम रोमाञ्चो मदङ्गं यत् पिधत्ते आच्छादयति तत्र हैमनो हिमसम्बन्धी पवनः हेतुः ॥५२॥

अनु०—पक्षान्तर में-अनुरागबती वह कोई मानिनी दैवात् उत्थित रोमाञ्चादि विकारों को छिपाती हुई कहती है। हे चपल दूति ! तू यमुना के तीर पर विद्यमान उस धूर्त्त कृष्ण की वार्त्ता फिर न चला कर। मैं उसके नज़दीक भी नहीं फटकुँगी। मैं संसार में कठोर हृदया बिख्यात हूँ, मेरे अंगों में इस समय जो रोमाञ्च हो रहा है उसका कारण यह हेमन्त ऋतु का शीतल पवन है [यहाँ गोपी दूती से अपने श्रीकृष्ण प्रेम का गोपन कर रही है] ॥५२॥

००००

क्षामं दूरे वसतु पटिमा चाटुवृन्दे तवायं
राज्यं स्वामिन् ! बिरचय मम प्राङ्गणं मा प्रयासीः ।
हन्त क्लान्ता मम सहचरी रात्रिमेकाकिनीयं
नीता कुञ्जे निखिलपशुपीनागराज्जागरेण ॥५३॥

टीका—ललिता राधिकामानभङ्गार्थमनुनयन्तं श्रीकृष्णं प्रत्याह—हे निखिलपशुपीनागर तव चाटुवृन्दे चाटूक्तिसमूहे पटिमा दूरे वसतु ॥५३॥

अनु०—ललिता मानभङ्गार्थ अनुनय कारी श्रीकृष्ण के प्रति कह रही है—हे श्रीकृष्ण ! मनोहारि चाटुवचन समूह में तुम्हारी यह चतुराई दूर रही । आप मेरे आँगन में राजा की भाँति बिराजिए, आप यहाँ से न जाइए । खेद का बिषय है कि हे सर्व्वगोपियों के लम्पट ! मेरी इस सखी ने अकेले ही कुञ्ज में समस्त रात्रि जगते जगाते ही व्यतीत करदी ॥५३॥

००००

मेदिन्यां ते लुठति दयिता मालती म्लानपुष्पा
तिष्ठन् द्वारे रमणि ! बिमनाः खिद्यते पद्मनाभः ।
त्वं चोन्निद्रा क्षपयसि निशां रोदयन्ती वयस्याः
माने कस्ते नवमधुरिमा तन्तु नालोकयामि ॥५४॥

टीका—सखी मानिनीं प्रत्याह—वनमालानिर्म्माणार्थं तव पुष्पचयनाभावात् मालती म्लानपुष्पा सती धरण्यां लुठति । हे रमणि ! वयस्याः सखी रोदयन्ती सती ॥५४॥

अनु०—मान करती हुई राधिका से उनकी सखी कह रही है—"हे सखि ! तुम्हारी प्यारी यह मालती माला म्लान पुष्पों वाली होकर पृथ्वी पर पड़ी है । हे रमणि ! द्वार पर खड़े हुए बिमन श्रीकृष्ण

भी दुखी हो रहे हैं। तुम भी सखियों को रुलाती हुई जगकर ही रात्रि को व्यतीत कर रही हो। इस मान में तुम्हारा कौनसा नया माधुर्य्य है-उसे मैं नहीं देख पा रही हूँ ॥५४॥

००००

मद्वक्त्राम्भोरुहपरिमलोन्मत्तसेवानुबन्धे
पत्युः कृष्णभ्रमर ! कुरुषे किन्तरामन्तरायम् ।
तृष्णाभिस्त्वं यदि कलरुतव्यग्रचित्तस्तदाग्रे
पुष्पैः पाण्डुच्छविमविरलैर्याहि पुन्नागकुञ्जम् ॥५५॥

टीका—गुरुजननिकटे वर्त्तमाना काचित् श्रीकृष्णेन ग्रामस्य निकटवर्त्ति-कुञ्जे स्वयं निन्हुत्य प्रेरितां दूतीं अङ्गसुगन्धेन तत्रागतं भ्रमरमुपदिश्याह—हे कृष्णवर्णभ्रमर पक्षे कृष्णरूपभ्रमर पत्युः जलाद्युष्णीकरण-रूपसेवानुबन्धे किं अन्तरायं विघ्नं करोषि ? कृष्णपक्षे—हे कलरुतेति मुरल्या कलगानस्य नायं समय इति भावः। तृष्णाभिस्त्वं यदि व्यग्र-चित्तस्तदा इतो दूरवर्त्तिनं पुन्नागकुञ्जं याहि। कुञ्जं कीदृशं अविरलैः पुष्पैः पाण्डुच्छविं श्वेतकान्ति विशिष्टम् ॥५५॥

अनु०—एक गोपिका कृष्णभ्रमर के व्याज से कृष्ण से कह रही है-"मेरे मुखकमल की सौरभ से उन्मत्त हे कृष्ण भ्रमर (१—काले भौंरे २—कृष्ण) पति की जलादि-उष्णीकरण सेवा में विघ्न क्यों डाल रहे हो। यदि तुम तृष्णा के कारण कलरुत(१—मधुर गुंजार २—वंशी की मधुरध्वनि करने के लिये) के लिए व्याकुलमना हो तो सामने ही घने पुष्पों के कारण पीतवर्ण वाले पुन्नाग के कुञ्ज में चले जाओ। (पति सेवा से निवृत्त होकर मैं भी वहीं आती हूँ) ॥५५॥

००००

अत्रायान्तं चलमपि हरिं लोकयन्ती बलिष्ठां
त्वामालम्ब्य प्रियसखि ! घने नास्मि कुञ्जे निलीना।
अस्मान्मुग्धे ! हृदयनिहितादद्य पीताम्बराचे
शक्तो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्ठाः ॥५६॥

टीका—इतः परं अर्द्ध श्लोकं सख्याः अर्द्ध यूथेश्वर्य्याः, हे सखि ! त्वां बलिष्ठामालम्ब्य निबिडे कुञ्जे अहं न लीना ॥५६॥

अनु०—सखी के साथ यूथेश्वरी का कथोपकथन यथा–"हे प्रिय-सखि ! यहाँ आते हुए चंचल हरि को देख कर भी मैं तुम बलिष्ठ का सहारा लेकर निबिड कुंज में लीन नहीं हुई हूँ" । इसके उत्तर मे वह सखी उत्तर देती है कि हे मुग्धे ! अब तो हृदय निहित (१–हृदय मन्दिर में विराजमान २–हृदय प्रदेश पर स्थित) पीताम्बर (१–कृष्ण २–पीतवस्त्र) को छोड़ कर दूसरा कोई भी तुम्हारे कुच परिचय (१–स्तनसंग २–स्तन ढकने) में समर्थ नहीं है, इस लिये तुम मेरे सामने दुखी न होओ ।" तुम्हारे प्राणेश कृष्ण यदि आए हैं तो मुझे बाधा स्वरूप न समझो और उनके साथ बिहार करो ॥५६॥

००००

मां पुष्पाणामवचयमिषाद् दूरमानीय कुञ्जं
स्मित्वा धूर्त्तः किमितिरभसादुच्चकैर्गायसि त्वम् ।
शंकामन्त न रचय मुधा तन्वि ! गीतं तनोमि
स्फीतं वृन्दावनभुवि मुहुः कृष्णसारोत्सवाय ॥५७॥

टीका—सखी प्रत्युत्तरमाह-मुधा व्यर्थं अन्तः शङ्कां मा रचय अहं तु कृष्णसारस्य हरिणस्योत्सवाय गीतं तनोमि, पक्षे कृष्णस्य सारोत्सवाय गीतं तनोमि ॥५७॥

अनु०—एक गोपी कृष्ण से कहती है-"पुष्प चयन के बहाने मुझ को दूर कुंज में लाकर धूर्त्त शिरोमणि तुम अब मुस्कराकर क्यों उल्लास से उच्चस्वर से गान कर रहे हो ?" इस पर कृष्ण उत्तर देते हैं कि "हे कृशांगि ! तुम व्यर्थ ही शंका न करो मैं तो वृन्दावन भूमि में कृष्णसार (१--कृष्णसार मृग २--कृष्ण को सार सर्व्वस्व मानने वाली गोपियाँ) के उल्लास के लिए, बार बार इस प्रकार उच्चस्वर से गान कर रहा हूँ" ॥५७॥

००००

बारं बारं व्रजसि सलिलच्छद्मना पद्मबन्धोः
पुत्रीं ज्ञातस्तव सखि ! रसः पुण्डरीकेक्षणेऽसौ ।
चेतः काम्या भवति विशदा सारसाली न बामे
तेन स्मेरं मुहुरभिलपाम्यच्युतं रक्तपद्मम् ॥५८॥

टीका—पद्मबन्धोः सूर्य्यस्य पुत्रीं यमुनां,पुण्डरीकस्य श्वेतकमलस्य ईक्षणे तव रसो राग इति मया ज्ञातः,पक्षे पुण्डरीकेक्षणे कृष्णे,प्रत्युत्तरमाह-हे बामे विशदा श्वेता सारसाली पद्मश्रेणी मम चेतः काम्या न भवति,तेन हेतुना स्मेरं ईषद्विकसितं अथचाच्युतमच्छिन्नं रक्तवर्णपद्मं मुहुरभिलषामि । पक्षे-विशदा निर्म्मला अथच न बामा प्रसिद्धा स्वश्रेणी मम चेतः काम्या भवति तेन हेतुना रक्त पद्मा नाम्नी सखी यत्र एवम्भूतमच्युतं श्रीकृष्णं मुहुरभिलषामि । ५८॥

अनु०—"हे सखि ! तुम बार बार पानी लाने के बहाने यमुना को जाती हो, वस्तुतः इस कार्य्य से पुण्डरीकेक्षण (१-श्वेत कमलों को देखने में २-कमल के समान नेत्रों वाले कृष्ण में) के प्रति तुम्हारा अनुराग मालूम हो गया ।" उसका उत्तर देती हुई प्रथम सखी कहती है कि "मुझे अथवा तुमको विकसित श्वेत-कमल-

श्रेणी अभिलषित नहीं है। मैं तो बार बार स्मेर (१--पूर्णरूप से विकसित,२--मंद मंद मुस्कराते हुए) अच्युत (१--कभी न मूँदने वाले २--जिनका प्रणय कभी मंद नहीं पड़ता अथवा अच्युत कृष्ण स्वरूप) रक्तपद्म (१-रक्तकमल २-जिनके प्रति लक्ष्मी भी किम्बा पद्मा नाम्नी सखी भी अनुरक्त है ऐसे कृष्ण) की ही अभिलाषा करती हूँ" ॥५८॥

◇◇◇◇

पश्याम्यन्तर्विहितवसतिं त्वां मरालाङ्गनानां
अत्र क्षीबे! स्पृहयसि कथं कृष्णकंठग्रहाय।
साधु ब्रूषे सखि! मदकलो मां शिखण्डोज्ज्वलोऽयं
कुञ्जे दृष्ट्वा भुजगदमनोद्दामदर्पोऽभ्युपैति ॥५९॥

टीका—मरालाङ्गनानां हंसस्त्रीणां अन्तर्मध्ये कृतवसतिं त्वां त्वां पश्यामि अतः हे क्षीवे मत्ते कथं कृष्णकण्ठस्य मयूरस्य ग्रहणाय स्पृहयसि तथा च हंसमयूरयोरहिनकुलवत्स्वाभाविकविरोधात् कथं विपक्षमध्ये स्थित्वा मयूरप्राप्तिरिति भावः। पक्षे अरालाङ्गनानां कुटिलवामा-सखीनां मध्ये कृतवसतिं त्वां पश्यामि। अतः कथं कृष्णकण्ठग्रहणाय स्पृहयसि, हे सखि! साधु ब्रूषे किं कस्त्वयं शिखण्डोज्ज्वलोऽयं मयूरः मां दृष्ट्वा स्वयमेवाभ्युपैति सन्निकटमागच्छति। पक्षे शिखण्डेनोज्ज्वलः श्रीकृष्णः भुजगः कालियस्तस्य दमने उद्दामदर्पो यस्य सः ॥५९॥

अनु०—"हे उन्मत्ते! मैं तुमको कुटिल नारियों में गिनती हूँ तुम हंसनियों के बीच में विराजमाना हो, किसलिये कृष्ण-कण्ठ अर्थात् मयूर का ग्रहणार्थ स्पृहा करती हो। हंस-मयूरों का एकत्र अवस्थान स्वाभाविक विरोध है। पक्षान्तर में-अरालाङ्गणा (कुटिल सखियों) के बीच विराजमान तुम क्यों श्रीकृष्ण कंठ की स्पृहा करती हो। अर्थात् तुम यहाँ

कृष्ण के कंठाश्लेष के लिए क्यों इच्छा करती हो।" इसके उत्तर में प्रथम सखी कहती है कि हे सखि! तुम ठीक कहती हो, परन्तु मुझ को देख कर यह मदकल (१–मद के कारण मधुर केका करने वाला २–मादक वंशीरव करने वाला) शिखण्डोज्ज्वल (१–पुच्छों से उज्ज्वल २–मयूरपुच्छ सिर पर धारण करता हुआ) तथा भुजगदमन (१–साँपों का दमन २–कालिय सर्प का दमन) से बहुत अधिक गर्वीला (१–मयूर २–श्रीकृष्ण) इसी कुंज में आ रहा है ॥५९॥



बाले! चन्द्रावलि! नहि बहिर्भूय भूयः प्रदोषे
गेहात् तृष्णावति! कुरु पुरः कृष्णवर्त्मावलोकम्।
सर्वस्यान्तर्जडिमदमने पावके नाथ लब्धे
मुग्धे! सिद्धिं मम रसवती प्रक्रिया न प्रयाति ॥६०॥

टीका—हे तृष्णावति चन्द्रावलि! गेहात् बहिर्भूय प्रदोषसमये भूयः पुनरपि पुरोऽग्रे कृष्णवर्त्मा वह्निस्तस्यावलोकं नहि कुरु। पक्षे–कृष्णवर्त्मावलोकं, चन्द्रावली आह हे मुग्धे! सर्वस्य वस्तुनः सन्तापनद्वारा अन्तर्जडिमदमने पावके वन्हौ मयानलब्धे सति मम रसवती प्रक्रिया न सिद्धिं प्रयाति। पक्षे सर्वजनस्यान्तः जाड्यदमने एव पावके पवित्रकारके श्रीकृष्णे न लब्धे सति मम शृंगाररसयुक्ता प्रक्रिया न प्रसिद्धिं प्रयाति ॥६०॥

अनु०—"हे बाले चन्द्रावलि! हे तृष्णावति! पुनः घर से बाहर निकल कर इस प्रदोष समय में सामने ही कृष्णवर्त्मावलोकन (१–आग की प्रतीक्षा २–कृष्ण के मार्ग का अवलोकन) मत करो।" इसका उत्तर देती हुई चन्द्रावली कहती है कि "हे मुग्धे! सबकी अन्त जड़िमा (१–आन्तरिक शैत्य २–आन्तरिक अज्ञान)

को नष्ट करने वाले (१—अग्नि २—कृष्ण) के न मिलने पर मेरी रसवती प्रक्रिया (१—रन्धन कार्य्य २—अनुराग व्यापार) सफल नहीं होगी ॥६०॥

००००

हस्तेनाद्य प्रियसखि ! लसत्पुष्करामेन दूरात्
कृष्णेनाहं मदकलदृशा कम्पिताङ्गी विकृष्टा ।
नीचैर्जल्प भ्रमति पुरतो भ्रान्तचित्ते ! गुरुस्ते
हूं कालिन्दीपुलिनविपिने दीप्रदन्तीश्वरेण ॥६१॥

टीका—हे प्रियसखि ! श्रीकृष्णेन लसत्पुष्करस्याभा यत्र एवं भूतेन हस्तेन करयेन कम्पिताङ्गी अहं आकृष्टा । प्रियसखी आह—ते तव गुरुलोकः पुरतो भ्रमति, तस्मात् नीचैर्जल्प, पुनर्यूथेश्वरी सक्रोधमाह हुमिति—दीप्रो यो दन्तीश्वरो हस्ती तेन कृष्णवर्णेन कर्त्ता हस्तेन शुण्डेन करयेन आकृष्टा इत्येव मया उक्तम् ॥६१॥

अनु०—हे प्रियसखि ! आज मुझको मदकलदृक् (अनुराग के कारण विकसित नेत्र वाले) कृष्ण ने लसत्पुष्कराभ (विकसित कमल सदृश) हाथ से दूर से ही अपनी ओर खींच लिया, इसी लिये मेरे अंग काँप रहे हैं। इस पर दूसरी सखी उसको सचेत करती हुई कहती है कि "हे भ्रान्तचित्ते ! धीरे बोल, श्वसुर आदि तेरे गुरुजन यहीं घूम रहे हैं।" प्रथम सखी यह सुनते ही वास्तविक अर्थ का छिपाव करती हुई इन्हीं शब्दों से दूसरा अर्थ प्रकट करती है—"हाँ यमुनातीर के कानन में मदकलदृक् (मद मत्त नेत्रों वाले) कृष्णरंग के उद्धत गजराज ने लसत्पुष्कराभ (विकसित कमल से शोभाशाली) अपने हस्त (सूँड) से मुझे पकड़ लिया, इसीलिये मेरे अंग काँप रहे हैं ॥६१॥

००००

वृन्दारण्ये मम बिदधिरे निर्भरोत्कण्ठितानि
क्रीडोल्लासैः सपदि हरिणा हा मया किं बिधेयम् ।
ज्ञातं धूर्त्ते ! स्पृहयसि मुहुर्नन्दपुत्राय तस्मै
मा शङ्किष्ठाः सखि मम रसो दिव्यसारङ्गतोऽभूत् ॥६२॥

टीका—हरिणा श्रीकृष्णेन वृन्दावने उत्कण्ठितानि विदधिरे चक्रिरे । प्रत्युत्तरमाह-मुरविजयिना स्मरार्त्तिं जृम्भितासि । हे सखि मा शंकिष्ठाः, दिव्य सारं गतः सुन्दरहरिणात् रसो रागोऽभूत, मया हरिणा इति यदुक्तं तत्र तृतीया किन्तु प्रथमान्तमेवेति भावः ॥६२॥

अनु०—हे सखि ! वृन्दारण्य में हरि (कृष्ण) ने क्रीडा उल्लासों के द्वारा मुझे अत्यन्त उत्कण्ठित किया है । हाय ! अब मैं क्या करूँ ?" इस पर दूसरी सखी कहती है कि 'हे धूर्त्ते ! मुझे ज्ञात हो गया है कि तुम वार-बार नन्दनन्दन के लिए अभिलाषा कर रही हो ।' इस पर अपने प्रेम का अपन्हव ( छिपाव ) करती हुई प्रथम सखी का उत्तर है कि "हे सखि ! हरि शब्द को सुनकर तुम शंका न करो, मेरा अनुराग तो दिव्य कृष्णसार [ १—मृग, २—श्रीकृष्ण ] में था" ॥६२॥

◇◇◇◇

इत्थम्भूता बहुविधपदारम्भगम्भीरगर्भा
कर्णानां मे स्फुटतरतया कोटिभिः पातुमिष्टा ।
आसीत्तासां प्रियसख ! पुरा यत्र कल्याणवाचां
प्रेमोल्लासप्रकटनपरा कर्मठा नर्म्मगोष्ठी ॥६३॥

(चतुर्दशभिः कुलकम्)

टीका—हे प्रियसख उद्धव यत्र नन्दीश्वरे तासां व्रजसुन्दरीणां कल्याण-वाचां नर्म्मगोष्ठी पुरा आसीत् । यदि मम कर्णानां कोटयः स्युस्तदा एव

कर्णकोटिभिः सा नर्म्मगोष्ठी पातुमिष्टा, नतु द्वाभ्यां कर्णाभ्यां सा पातुं शक्येत्यर्थः॥६३॥

अनु०—अब श्रीकृष्ण उद्धव से कहते हैं कि "हे प्रियमित्र! इस प्रकार पहले जिस व्रज में मधुरभाषिणी उन गोपियों की अनेक पदों के प्रयोग से गंभीर अभिप्रायों वाली, प्रेमोल्लास को प्रकट करने वाली नर्म गोष्ठियाँ हुआ करती थीं और अत्यन्त स्फुट होने के कारण उनको मैं कोटि कोटि कानों से पान करने की इच्छा करता था" ॥६३॥

००००

केयं श्यामा स्फुरति सरले! गोपकन्या किमर्थं
प्राप्ता सख्यं तव मृगयते निर्म्मितासौ वयस्या।
आलिङ्गामुं मुहुरिति तथा कुर्वती मां विदित्वा
नारीवेशं ह्रियमुपययौ मानिनी यत्र राधा ॥६४॥

टीका—यूथेश्वरी सखीं प्रत्याह—केयमिति। गोपकन्या किमर्थमत्र प्राप्ता पुनः सखी प्रत्युत्तरमाह—तव सख्यं मृगयते, मया असौ श्यामा वयस्या निर्म्मिता कृता, पुनः सखी आह अमुं श्यामासखीं आलिङ्गनं कुरु, तथा कुर्व्वती राधा नारीवेशं मां विदित्वा ॥६४॥

अनु०—श्रीराधिका ने पूछा "हे सखि! वह श्यामांगी कौन है?" सखी के द्वारा यह उत्तर दिए जाने पर कि 'हे सरले! यह तो गोपकन्या है' राधिका ने प्रश्न किया कि 'यह किस लिए यहाँ आई है?' "तुम्हारी सखी बनने के लिए यह यहाँ आई है" इस उत्तर को सुनकर राधिका ने अपनी स्वीकृति प्रदान की 'मैंने इसे सखी बना लिया'। सखी के द्वारा यह कहे जाने पर कि 'इसका आलिङ्गन करो' जब राधा ने हे उद्धव! मेरा आलिंगन किया तो

नारीवेश धारी मुझको पहचान कर वह मानिनी राधा वहाँ लज्जित हो गई थी ॥६४॥

◇◇◇◇

यत्रोत्तुङ्गाः करपरिचयं शश्वदासेदिवांसो
भूयांसो मे विमलदृशदां कल्पिता मण्डलीभिः ।
बन्धायोद्यत्तरलतरसां तर्णकानां निखाताः
कीलाः कूलस्थलवलयिनो भान्ति पद्माकराणाम् ॥६५॥

टीका—यत्र नन्दीश्वरे पद्माकराणां पावनसरसां कूलस्थलवर्त्तिनः कीलाः वत्सबन्धनार्थं कील इति प्रसिद्धा भान्ति । कथं भूताः दृशदां प्रस्तराणां मण्डलीभिः कल्पिताः, पुनश्च शश्वत् निरन्तरं गोदोहनार्थमागतानां गोपानां करपरिचयमासेदिवांसः प्राप्तवन्तः, पुनश्च उद्यत्तरलवेगवत: तर्णकाणां वत्सानां बन्धाय निखाताः ॥६५॥

अनु०—हे उद्धव ! जहाँ (पावन सरोवर के तट वर्ती) उछल उछल कर भागने वाले गोवत्सों को बाँधने के लिये, निरन्तर गोपों के हाथों से परिचित, निर्मल प्रस्तर खंडों के बने हुए अनेक ऊँचे ऊँचे किले शोभायमान हैं जो तालाबों के किनारे किनारे गड़े हुए हैं ॥६५॥

◇◇◇◇

नो जानीमः कठिनविधिना मद्विधानां कपाले
गोपालीनां किल विलिखिता कीदृशी वर्णलेखा ।
यः सन्ध्यायां सुमुखि ! मिलितो गोकुले राजदूतः
सोऽयं कर्णे निभृतनिभृतं माधवं वावदीति ॥६६॥

टीका—सोऽयं राजदूतः निभृतनिभृतं यथा स्यात्तथा श्रीकृष्णं कर्णे वावदीति पुनः पुनर्वदति ॥६६॥

अनु०—हे सुमुखि ! न मालूम, कठोर विधाता ने मुझ सरीखी (भाग्यहीन) गोपियों के ललाट में क्या लिखा है ? सन्ध्या के समय गोकुल में जो राजदूत (अक्रूर) आया था वह माधव के कान में चुपचाप न मालूम क्या क्या कह रहा है ॥६६॥

००००

एष क्षत्ता व्रजनरपतेराज्ञया गोकुलेऽस्मिन्
बाले ! प्रातर्नगरगतये घोषणामातनोति ।
दुष्टं भूयः स्फुरति च बलादीक्षणं दक्षिणं मे
तेन स्वान्तं स्फुटति चटुलं हन्त भाव्यं न जाने ॥६७॥

टीका—पशुपनृपते र्नन्दस्याज्ञया कोतोआल इति प्रसिद्धः क्षत्ता प्रातर्मथुरागमनाय घोषणामातनोति, भाव्यं भवितव्यम् ॥६७॥

अनु०—हे बाले ! यह अक्रूर व्रजराज की आज्ञा से इस गोकुल में प्रातःकाल मथुरा जाने के लिए कोतवाल के द्वारा घोषणा कर रहा है। अशुभ सूचक मेरा यह दाहिना नेत्र बार २ फड़क रहा है और इससे हृदय विदीर्ण हो रहा है। हाय ! भविष्य में न मालूम क्या होगा ॥६७॥

००००

प्रातर्यात्रां नरपतिपुरे तथ्यमाकर्ण्य शौरेः
आयामाय प्रियसखि ! मया यामिनी प्रार्थिताभूत् ।
पश्य क्षिप्रं प्रथितलघिमा पापिनीयं प्रभाता
जायन्ते हि प्रचुरतमसो नानुकूलाः परेषु ॥६८॥

टीका—आयामाय दैर्घ्याय यामिनी रात्रिः प्रार्थिता अभूत्। हे सखि पश्य इयं पापिनी रात्रिः अन्यदिनापेक्षयापि क्षिप्रमेव प्रभाता अभूत्,

कथंभूता प्रथिता विस्तृता लघिमा नीचत्वं यथा, हि निश्चितं प्रचुर-तमोगुणयुक्ता हि जनाः परे न अनुकूला जायन्ते ॥६८॥

अनु०—हे प्रियसखि ! "निश्चय ही प्रातः काल श्रीकृष्ण मथुरा को प्रस्थान करेंगे" यह सुनकर मैंने यामिनी से दीर्घ होने की प्रार्थना की; परन्तु देख ! यह पापिनी छोटी हो गई और शीघ्र ही प्रभात हो गया। सत्य है प्रचुर तमवाले (१–बहुत अधिक अन्धकार वाले २–बहुत अधिक अज्ञानी) दूसरों के लिए हितकर नहीं बनते ॥६८॥

००००

यावद् व्यक्तिं न किल भजते गान्दिनेयानुबन्धः
तावन्नत्वा सुमुखि ! भवतीं किञ्चिदभ्यर्थयिष्ये ।
पुष्पैर्यस्या मुहुरकरवं कर्णपूरान् मुरारेः
सेयं फुल्ला गृहपरिसरे मालती पालनीया ॥६९॥

टीका—गान्दिनेयस्य अक्रूरस्य अनुबन्धः उद्यमः, मालती त्वया पालनीयेत्यनेन मम मरणे सति रक्षां विना तस्याः पालनं न भविष्यतीति ध्वनिः ॥६९॥

अनु०—"हे सुमुखि ! श्रीकृष्ण को मथुरा ले जाने का अक्रूर का उद्योग जब तक प्रकट नहीं होता है उसके पहले ही मैं प्रणतिपूर्वक तुम से कुछ प्रार्थना करती हूँ। जिसके पुष्पों से मैं बार बार श्रीकृष्ण के कर्णभूषण बनाया करती थी, घर के प्रांगण में फूली हुई उस मालती की तुम रक्षा करना।" भावार्थ यह है कि श्रीकृष्ण के मथुरा जाने के पहले ही मैं अपने प्राण छोड़ दूँगी। निज प्रियवस्तु को वयस्या के हाथ में छोड़ देना महाभाव का एक लक्षण है ॥६९॥

००००

नावैषि त्वं पतितमशनिं मूर्ध्नि निर्म्मीयमाणा-
मेनां कस्ते सखि ! शिखरिणीं हन्त पाता हतासि ।
तूर्णं मुग्धे ! बहिरनुसर प्राङ्गणं गेहमध्यात्
अध्यारूढो जिगमिषुरसौ स्यन्दनं नन्दसूनुः ॥७०॥

टीका—हे सखि ! मूर्ध्नि पतितं अशनिं वज्रं त्वं नावैषि न जानासि किन्तु त्वया निर्म्मीयमाणामेतां शिखरिणीं को जनः पाता पानं करिष्यति । कृष्णस्तु जिगमिषुः सन् स्यन्दनमारूढः ॥७०॥

अनु०—हे सखि ! तुम सिर पर गिरते हुए वज्रपात को नहीं जानती । तुम्हारे द्वारा परिपोषित इस मल्लिका की कौन रक्षा करेगा । अथवा तुम से रचित इस शिखरिणी (रसाला) को कौन पान करेगा ? हाय तुम तो विनाश को प्राप्त हो रही हो । हे मुग्धे ! गृह मध्य से शीघ्र ही आँगन में तो आओ । देखो, मथुरा जाने की इच्छा से ये नन्दनन्दन रथ में बैठ गए ॥७०॥

००००

आसीदार्य्ये ! पशुपपटलीमन्तरा नान्तरायः
प्रापुः पापा न च विकलतां पादभङ्गैस्तुरङ्गाः ।
ध्वस्तो नाभूदयमपि मनाक् स्यन्दने चक्रबन्धः
सत्यं गन्ता मधुपुरमसौ हन्त किं केशिहन्ता ॥७१॥

टीका—हे आर्य्ये सखि पशुपपटलीमन्तरा गोपसमूहमध्ये अन्तरायः विघ्नः नासीत् एवं रथस्थास्तुरङ्गा अपि पादभङ्गैः विकलतां न प्रापुः तस्मात्सत्यं मधुपुरीं गन्ता गमिष्यति ॥७१॥

"हे आर्ये ! क्या गोपकुल में किसी ने कोई बाधा उपस्थित नहीं की ? क्या पापी घोड़ों के पैर नहीं टूटे ? क्या रथ का यह पहि

थोड़ा भी ध्वस्त नहीं हुआ ? हाय ! क्या ये केशिसूदन सचमुच ही मथुरा को जावेंगे।" अर्थात् यदि ये बाधाएँ आ गई होतीं तो श्रीकृष्ण का मथुरा जाना कुछ समय के लिए स्थगित हो गया होता ॥७१॥

००००

आराद्ग्रे कलय नृपते दूत ! निर्धूतलज्जा
सज्जा तन्वी किमपि विषमं साहसं कर्तुमिच्छुः ।
यानाद्यावद्विसृजसि पुरश्चन्द्रहासं न कृष्णं
हस्तात्तावद्विसृजति सखी चन्द्रहासं न कृष्णम् ॥७२॥

टीका—हे नृपतेर्दूत अक्रूर ! अग्रे कलय पश्य, निर्धूतलज्जा तत एव किमपि साहसं कर्तुमिच्छुरियं तन्वी सज्जा सज्जते उद्यता इत्यर्थः । साहसमेवाह—चन्द्रतुल्यहासो यस्य एवंभूतं श्रीकृष्णं त्वं यानात् रथतः यावन्न विसृजसि तावन्मम सखी कृष्णं कृष्णवर्णं चन्द्रहासं खड्गं हस्तान्न विसृजति । तथा च त्वं यदि कृष्णं न त्यजसि तदा इयं सखी स्वहस्त-धृतखड्गेनात्मघातं करिष्यति । स्त्रीवधस्तु त्वय्येव लगिष्यतीति भावः ॥७२॥

अनु०—हे राजकिंकर अक्रूर ! कुछ समीप आकर तो देखो । यह कृशांगी व्रजबाला लज्जा को छोड़ कर विषम साहस (आत्महत्या) करने के लिए तैयार हो गई है । जब तक तुम चन्द्र के समान हाँसीवाले कृष्ण (चन्द्रहास कृष्ण) को रथ से नहीं उतारोगे तब तक यह सखी भी इस काली तलवार (कृष्ण चन्द्रहास) को नहीं छोड़ेगी । अर्थात् कृष्ण के विरह में हाथ में तलवार लेकर आत्म-हत्या करने के लिए उद्यत इस सखी को प्राणरक्षा के लिए तुम कृष्ण को रथ से उतारो नहीं तो तुम स्त्रीवधरूप महान् पाप के भागी बनोगे ॥७२॥

०००

मुग्धे ! पश्य क्षणमपि हरिं नेत्रमुन्मीलयन्ती
मोहेन त्वं विरचय मुहुर्नात्मनो वञ्चनानि ।
शृण्वन् काकूत्करमपि पुरो हन्त सीमन्तिनीनां
क्रूरस्तूर्णं विनुदति रथं दूरमक्रूरनामा ॥७३॥

टीका—मूर्च्छादिना श्रीकृष्णदर्शने असमर्थां स्वयूथेश्वरीं प्रति सखी आह मुग्धे इति ॥७३॥

अनु०—हे मुग्धे ! निर्निमेष नेत्रों से क्षण भर के लिए तो कृष्ण को और देख लो। बार बार मोह से (अर्थात् मूर्च्छित होकर) तुम अपने आपको उनके दर्शन सुख से वंचित मत करो ! हाय ! अक्रूर नामक यह क्रूर ब्रजबालाओं के करुण रुदन को सामने ही सुनता हुआ भी रथ को शीघ्र ही दूर ले जा रहा है ॥७३॥

◇◇◇◇

पश्य क्षामोदरि ! तव मुखालोकजन्मा हि शोको
वारं वारं हरिनयनयोर्बाष्पमन्तस्तनोति ।
धावद्वाजिस्फुरदुरुखुरोत्थानितानां वितानो
धूलीनां तु श्रयति विसरन्नेष मिथ्याकलङ्कम् ॥७४॥

टीका—हे कृशोदरि ! तव मुखालोकनाज्जातो यः श्रीकृष्णशोकः स श्रीकृष्णस्य नयनयोरन्तर्मध्ये वाष्पं वारं वारं तनोति, परं तु अश्व-खुरोत्थानां धूलीनां वितानश्चन्द्रातपः मिथ्याकलङ्कं श्रयति प्राप्नोती-त्यर्थः। धूलिसम्बन्धादेव मम नेत्रे जलमागतमिति श्रीकृष्णेनोच्यते एष एव मिथ्याकलङ्कः ॥७४॥

अनु०—हे कृशोदरि ! देख लो, तुम्हारे मुख को देखने से उत्पन्न होने वाले शोक से बार बार श्रीकृष्ण के नेत्र अश्रुपूर्ण हो रहे हैं।

अर्थात् तुम्हारे मुखदर्शन से शोकातुर होकर श्रीकृष्ण आँसू बहा रहे हैं। दौड़ते हुए घोड़ों के विशाल खुरों से उठी हुई धूलि का यह फैलता हुआ विस्तार तो व्यर्थ ही कलंक का भागी बन रहा है। भाव यह है कि तुम्हारे शोक के कारण श्रीकृष्ण की आँखें अश्रुयुक्त हैं। धूलि के गिरने के कारण नहीं। परन्तु बाहरी लोग समझ रहे हैं कि धूलि के गिरने के कारण ही श्रीकृष्ण की आँखों में आँसू आ रहे हैं ॥७४॥



कृष्णं मुष्णन्नकरुण ! बलाद्गोपनारीवधार्थी
मा मर्य्यादां यदुकुलभुवां भिन्दि रे गान्दिनेय ! ।
इत्युत्तुङ्गा मम मधुपुरे यात्रया यत्र तासां
वित्रस्तानां परिबवलिरे बल्लवीनां विलापाः ॥७५॥

टीका—रे गान्दिनेय ! श्रीकृष्णं मुष्णन् यदुकुलभवां यादवानां मर्य्यादां मा भिन्दि, मम मधुपुर्यां यात्रया वित्रस्तानां तासां इति उत्तुङ्गा अत्युच्चा विलापाः परिबवलिरे बलवन्तो बभूवेत्यर्थः ॥७५॥

अनु०—"हे अकरुण गान्दिनीसुत अक्रूर ! कृष्ण का अपहरण करते हुए तुम बलपूर्वक व्रजबालाओं के वध के अभिलाषी बन कर यदुवंशियों की मर्य्यादाओं का तो उल्लंघन न करो। अर्थात् नारियों के वध से यदुवंशियों के उत्तम कुल को तो कलंकित न करो।" जहाँ इस प्रकार मेरे मथुरा आते समय उन भयातुर गोपियों का महान् विलाप चारों ओर परिव्याप्त होगया था॥७५॥



शश्वन्नीराहरणकपटप्राप्तगोपालनारी-
गूढक्रीडावसतिनिबिड़च्छायकुञ्जोपगूढः ।

यत्रादूरे विलसति महान् बद्धरोलम्बसद्मा-
पद्मामोदस्नपितपवनः पावनाख्यस्तडागः ॥७६॥

टीका—यत्र नन्दीश्वरे अदूरे निकट एव पावनाख्यस्तडागो विलसति। कथंभूतः निरन्तरजलाहरणारूपकपटेन प्राप्तानां गोपनारीणां सम्भोगादिगूढक्रियाया वसति यत्र तथाभूतेन निविडछायायुक्तेन कुञ्जेन उपगूढः आलिङ्गितः, पुनश्च बद्धं रोलम्बैर्भ्रमरैः सद्म यत्र ॥७६॥

अनु०—श्रीकृष्ण उद्धव से कहते हैं कि "निरन्तर पानी भरने के व्याज से आने वाली गोपाङ्गनाओं के गुप्त विहार का स्थान, घनी छायाओं वाले कुंजो से परिवेष्टित तथा अनेक भ्रमरों से युक्त कमलों की सुगन्धि से सुगन्धित वायुओं वाला पावनाख्य बड़ा भारी सरोवर जहाँ नन्दीश्वर के समीप ही शोभायमान है ॥७६॥

०००० 

लीलाक्रान्तैः मुरविजयिनः सर्वतः पादपातैः
वैलक्षण्यं किमपि जगतामन्तराकर्षि नीताः।
एते नन्दीश्वरपरिसरा नेत्रवीथीं भजन्ते
तीव्रं मातः किमपि दहनं चेतसि ज्वालयन्तः ॥७७॥

टीका—मुरविजयिनः श्रीकृष्णस्य लीलया आक्रान्तैः पादपातैः करणैः किमपि वैलक्षण्यं नीताः प्राप्ताः नन्दीश्वरपरिसराः मम नेत्रवीथीं भजन्तः सन्तः चेतसि कमपि दहनं ज्वालयन्ति। हे मातः सखि वैलक्षण्यं कीदृशं जगतामन्तराकर्षि जगतामन्तःकरणाकर्षणशीलः ॥७७॥

अनु०—हे मात! अर्थात् हे सखि! चारों ओर श्रीकृष्ण के विलास युक्त चरण निक्षेपों से संसार के प्राणियों के लिए अनिर्वचनीय मनोहर तथा अत्यन्त आकर्षित करने वाले विलक्षण बने हुए ये

नन्दीश्वर पर्वत के प्रदेश दृष्टिगोचर हो रहे हैं जो चित्त में एक विलक्षण प्रकार की अग्नि रूप से जला रहे हैं ॥७७॥

◇◇◇◇

अस्ति प्रेम्णां त्वयि परिमलो मांसलः कंसशत्रोः
अद्य श्वो वा स तव भविता हारिहारानुकारी ।
दम्भोलीनामपि सुवदने ! गर्भनिर्भेददक्षैः
एभिः कामं किमु विलपितैर्बान्धवान् दन्दहीषि ॥७८॥

टीका—हे सखि ! कंसशत्रोस्त्वयि मांसलः बलवान् प्रेम्णां परिमलोऽस्ति अतएव स श्रीकृष्णः अद्य श्वो वा अत्रागत्य तव मनोहारि हारस्यानुकारी भविता भविष्यति । तस्मात् हे सुवदने दम्भोलीनां वज्राणां गर्व्व-निर्भेददक्षै विलपितैः करणैः कथं बान्धवानस्मान् दंदहीषि ॥७८॥

अनु०—हे सुवदने ! तुम में कंसनाशन श्रीकृष्ण के प्रेम की अपार सौरभ विद्यमान है, इस लिए वे आज नहीं तो कल अवश्य ही तुम्हारे मनोहर हार का अनुकरण करेंगे अर्थात् हार के समान तुम्हारा कंठाश्लेष करेंगे । फिर तुम वज्रों को भी पिघलादेने वाला इन विलापों से अपने बन्धुजनों को क्यों बार बार जला रही हो ? ॥७८॥

◇◇◇◇

मा कार्पण्याद्विरचय वृथा वाष्पमोक्षं हताशे !
कृष्णाश्लिष्टां तनुमनुपमां स्वेच्छया न त्यजामि ।
ज्वालस्तीव्रो विरहदहनादात्मजन्मा बलान्मे
मर्म्मोन्माथी लघुतरमिमां पातयन् दन्दहीति ॥७९॥

टीका—सखीवाक्यं श्रुत्वा यूथेश्वरी प्रत्युत्तरमाह—हे हताशे मद्दुःखं दृष्ट्वा कार्पण्यात् दैन्यात् वाष्पमोक्षं वृथामारचय । श्रीकृष्णेनाश्लिष्टा-

मनुपमां तनुं किं स्वेच्छया अहं त्यजामि किन्तु विरहदहनात् प्राप्त-जन्मा ज्वोलः मर्म्मोन्माथी सन् इमां तनुं बलात् पातयन् लघुतरं शीघ्रं यथा स्यात्तथा दंदहीति ॥७६॥

अनु०—"हे हताशे ! व्याकुल होकर व्यर्थ ही अश्रु मोचन न करो ।" इसका उत्तर देती हुई प्रथम सखी यूथेश्वरी कहती है कि हे सखि ! कृष्ण का आलिंगन प्राप्त करने वाले इस अनुपम शरीर को मैं स्वेच्छा से नहीं छोड़ रही हूँ, परन्तु कृष्ण की विरहाग्नि से उत्पन्न होने वाली तथा मर्मस्थल को बेधने वाली ये ज्वालाएँ बलपूर्वक मेरे इस शरीर को भ्रंशित कर के बार बार जला रही हैं ॥७६॥



कारुण्याब्धौ क्षिपसि जगतीं हा किमेभिर्विलापैः
धेहि स्थैर्यं मनसि यदभूरध्वगे बद्धरागा ।
स्मृत्वा वाणीमपि यदि निजां स व्रजं नाजिहीते
धूर्त्तोऽस्माकं त्रिजगति ततस्तन्वि ! निर्दोषताभूत् ॥८०॥

टीका—मनसि धैर्यं धेहि यद्‌यस्मादध्वगे पथिके श्रीकृष्णे त्वं बद्ध-रागाभूः । स धूर्त्तः यदि व्रजं ना जिहीते न आगच्छति तदा अस्माकं निर्दोषता जगति अभूत् ॥८०॥

अनु०—"हाय ! तुम इन विलापों से संसार को करुणासागर में क्यों डुबो रही हो ? मन में धीरज धरो क्यों कि रास्ते चलते से तुमने प्रेम किया है । (पथिक के प्रति किए गए प्रेम की यही गती होती है, यह सोच कर तुम्हें धैर्य धारण करना चाहिए । ) हे कृशांगि ! यदि वे धूर्त्तराज कृष्ण अपने वचनों को स्मरण करके भी (मैं थोड़े ही दिनों में मथुरा से ब्रज आ जाऊँगा)ब्रज में नहीं

लौटते हैं तो हमारी निर्दोषता तीनों लोकों में घोषित हो आ-
वेगी ॥८०॥

०००००

क्वायं गन्ता मधुरिपुरितो गोकुलादस्मदीयः
काले रंस्ये सुखमिति मया हन्त मानो व्यधायि ।
का जानीते यदिह खलताचातुरीदीक्षितेन
निक्षेप्तव्यं शिरसि कुलिशं गान्दिनीनन्दनेन ॥८१॥

टीका—अयं मधुरिपुः गोकुलादन्यत्र क्व गन्ता गमिष्यति, अपि तु न कुत्रापि यतोऽस्मदीयः, तस्मात् यथोचितकाले तेन सह अहं रंस्ये इति मनसि कृत्वा हन्त खेदे मया मानो व्यधायि ॥८१॥

अनु०—"हमारे वे मधुहन्ता श्रीकृष्ण इस गोकुल से अन्यत्र कहाँ जावेंगे। आगे किसी समय इनसे इच्छा पूर्वक विहार करूँगी" हाय! इसी भावना से मैंने उनसे मान किया। यह किसको मालूम था कि खलचातुर्य्य में परम प्रवीण गान्दिनीसुत अक्रूर हमारे सिर पर इस प्रकार गाज गिरा देगा ॥८१॥

०००००

न क्षोदीयानपि सखि! मम प्रेमगन्धो मुकुन्दे
क्रन्दन्तीं मां निजसुभगताख्यापनाय प्रतीहि ।
खेलद्वंशीवलयितमनालोक्य तद्वक्त्रबिम्बं
ध्वास्तालम्बा यदहमहह प्राणकीटं बिभर्मि ॥८२॥

आशापाशैः सखि नवनवैः कुर्वती प्राणबन्धं
जात्या भीरुः कति पुनरहं वासराणां क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्
उत्फुल्लास्तान्मम किल बलान्मर्म निर्मूलयन्ति ॥८३॥

टीका —हे सखि ! क्षोदीयानपि अतिशयक्षुद्रोऽपि प्रेमगन्धो मम मुकुन्दे नास्ति किन्तु अहं प्रेमवतीति निजसुभगताख्यापनायैव मां क्रन्दन्तीं प्रतीहि । यद् यस्मात् खेलन्त्या वंश्या वलयितं युक्तं तस्य वक्त्रबिम्बं अनालोक्य ॥८२-८३॥

अनु०—हे सखि ! श्रीकृष्ण के प्रति मेरी तनिक भी प्रेमगंध नहीं है । मैं जो यह क्रन्दन कर रही हूँ उसको तो तुम मेरे सौभाग्य का विज्ञापन मात्र ही समझो । हाय ! कृष्ण के वेणु भूषित मुखमंडल को न देखकर अनाथा मैं अब तक प्राण को धारण किए हुए हूँ । तात्पर्य्य है कि मैं उनमें वास्तविक अनुरागवती नहीं हूँ । यदि अनुरागवती होती अब तक मेरे ये प्राण शरीर से अलग हो गए होते ॥८२॥

अनु०—"हे सखि ! आशा के नये नये बंधनों से अपने प्राणों को अवलम्बन देती हुई मुझ अबला को कितने दिन और विताने होंगे ? वृन्दावन के ये विकसित वृक्ष उन विलासों का स्मरण कराते हुए बलपूर्वक मेरे मर्मस्थल को बींधे डाल रहे हैं ।" अर्थात् 'कृष्ण आवेंगे और उनके साथ फिर विलास करूँगी' इस आशा से मैंने अब तक प्राणों को रोके रक्खा है । अब अधिक दिन रोकना दुष्कर है ॥८३॥

◇◇◇◇

सा विश्राम्यन्मनसिजधनु र्विभ्रमोद्बोधविद्या
चिल्लीवल्लिभ्रमिमधुरिमोद्दामसम्पद्भिरिणा ।
एतामार्तिं मम शमयिता स्मेरताशङ्करङ्गी
प्रेमोत्तुङ्गा किमु मुरभिदो भंगुरापाङ्गभङ्गी ॥८४॥
कामं दूरे सहचरि ! वसतिर्वसि यद्-कंसवैरी
नेदं लोकोत्तरमपिविपद् दिनं मे दुनोति ।

आशाकीलो हृदि किल धृतः प्राणरोधी तु यो मे
सोऽयं पीड़ां निविड़वड़बावन्हितीव्रस्तनोति ॥८५॥

टीका—सुरभिदः श्रीकृष्णस्य भंगुरापाङ्गभङ्गी एतां मम आर्त्तिं किं शमयिता, कथंभूता विश्राम्यन्ती कन्दर्पस्य धनुर्विक्रमे उद्बोधविद्या यतः यस्या अपाङ्गभङ्ग्या अग्रे कन्दर्पविद्या विश्रान्ता लुप्ता बभूवेरथ्रथः। पुनश्च भ्रूवल्या अभिरूपमधुरिमोहासलम्पद्भिरिष्टा ॥८४-८५॥

अनु०—क्या विलासशील कामदेव के धनुष के विलास को विश्रामित कर देने वाली अर्थात् जिसके आगे काम धनुष का विलास व्यर्थ है, ऐसी चिल्लीलता के भ्रमण के समान माधुर्य्यवाली, अत्यन्त श्रीसम्पन्न होने से प्रिय, मन्दहास्य से अत्यन्त सुखप्रद तथा प्रेमपूर्ण श्रीकृष्ण की कुटिल अपांगभंगिमा मेरे इस मनः सन्ताप को नष्ट करेगी ॥८४॥

हे सहचरि! कंसनाशन श्रीकृष्ण जो दूर देश में स्वच्छन्दता के साथ रह रहे हैं, यह पीड़ा लोकोत्तर होते हुए भी मुझको व्यथित नहीं कर रही है। परन्तु मैंने "श्रीकृष्ण पुनः आवेंगे' इस प्रकार का जो आशा का शंकु हृदय में धारण किया था और जिसने मेरे प्राणों को अभी तक नहीं निकलने दिया है, वही बडवाग्नि के समान अत्यन्त तीव्र बन कर पीड़ा को बढ़ा रहा है" ॥८५॥

००००

तत्र स्फीताधरमधुभरे शीतलोत्सङ्गसङ्गे
सौन्दर्य्येणोल्लिखितवपुषि स्फारसौरभ्यपूरे।
नर्म्मारम्भस्थपुटितवचः कन्दले नन्दसूनौ
मोदिष्यन्ते मम सखि! कदा हन्त पञ्चेन्द्रियाणि॥८६॥

टीका—हे सखि! मम पञ्चेन्द्रियाणि कदा नन्दसूनौ मोदिष्यन्ते? कथंभूते स्फीताधरमधुभरे एतेन जिह्वेन्द्रियाह्लादकत्वमुक्तम्। एवमुत्त-

रत्रापि बोध्यम् । पुनश्च नर्म्मारम्भे रथपुटितो शुकः वाक्यकन्दलो यस्य ॥८६॥

अनु०—हे सखि ! ऐसा कब होगा जब अत्यन्त माधुर्य्य प्राप्त अधरों वाले, शीतल क्रोड देश वाले, अर्थात् जिनकी गोद संतापों का उपशमन करने वाली है, सौन्दर्य्य से उद्भासित शरीर वाले, अत्यधिक सुगन्धि से युक्त, विहार के समय नव नव रस रुचिर विशृंखल वचन बोलने वाले श्रीकृष्ण से मेरी पाँचों इन्द्रियाँ फिरै हर्षित होंगी।" अधरमधु के पान से जिह्वा, शीतल क्रोड के संसर्ग से स्पर्शेन्द्रिय, सौन्दर्य्यशाली शरीर से नेत्रेन्द्रिय, सौरभसमुदाय से नासिका तथा रसमय वचनों से कर्ण प्रमुदित होंगे ॥८६॥

००००

भिन्दन्नक्ष्णोः मम कलुषतां श्यामलः श्यामलाभिः
लिम्पन्तीभिर्गिरिपरिसरं माधुरीणां छटाभिः ।
आविर्भावी गुरुतरचमत्कारभाजः कदा मे
खेलन्नग्रे निखिलकरणानन्दनो नन्दसूनुः ॥८७॥

टीका—अखिलकरणानां समस्तेन्द्रियाणां आनन्दनो नन्दसूनुः माधुरीच्छटाभि मम अक्ष्णोः कलुषतां भिन्दन् सन् गुरुतरचमत्कारभाजो मम अग्रे कदा आविर्भावी आविर्भावि भविष्यति । छटाभिः कथंभूताभिः श्यामलादपि श्यामलाभिः, पुनश्च गिरे र्नन्दीश्वरस्य परिसरं लिम्पन्तीभिः लेपनं कुर्वतीभिः ॥८७॥

अनु०—हे सखि ! ऐसा कब होगा जब कि समस्त इन्द्रियों को आह्लादित करने वाले वे कृष्ण अपनी श्यामल माधुरी छटाओ से पर्वत प्रदेश को मार्जित करते हुए अर्थात् अपनी श्यामल माधुर्य्य छटा से पर्वतादि प्रदेश को श्यामल अर्थात् हरा बनाते हुए तथ

मेरे नेत्रों की कलुषता को दूर करते हुए अत्यन्त आश्चर्य में पड़ी हुई मेरे सामने खेलते हुए प्रकट हो जावेंगे ॥८७॥

०००००

आनम्रायां मयि निजमुखालोकलक्ष्मीप्रसादं
खेदश्रेणीविरचितमनोलाघवायां विधेहि ।
सेवा भाग्ये यदपि न विभो ! योग्यता मे तथापि
स्मारं स्मारं तव करुणतापूरमेवं ब्रवीमि ॥८८॥

टीका—खेदश्रेण्या विरचितमनो लाघवायां मयि, हे विभो ! निजमुखालोकलक्ष्मीप्रसादं विधेहि कुरु । यद्यपि सेवा भाग्ये मम योग्यता नास्ति तथापि एवं ब्रवीमि ॥८८॥

हे विभो ! निरन्तर विलाप करने के कारण मन को छोटा समझने वाली तथा अत्यन्त प्रणत मुझको दर्शन प्रदान करिए । यद्यपि मेरे भाग्य में आपकी सेवा नहीं है, तथापि मुझ में उसकी योग्यता तो है ही । आपकी कारुण्यराशि का पुनः पुनः स्मरण करके ही मैं ऐसा कह रही हूँ ॥८८॥

०००००

क्रीडातल्पे निहितवपुषः कल्पिते पुष्पजालैः
स्मित्वा स्मित्वा प्रणयरभसात् कुर्वतो नर्मभङ्गीः ।
विन्यस्यन्ती तव किल मुखे पूगफाली विधास्ये
कुञ्जद्रोण्यामहमिह कदा देव ! सेवाविनोदम् ॥८९॥

टीका—तदेवाह पुष्पजालैः कल्पिते निर्मिते क्रीडातल्पे केलिशय्यां निहितवपुषस्तव मुखपुटे पूगफालीं गुवाकखण्डं विन्यस्यन्ती अहं कदा सेवाविधानं विधास्ये ॥८९॥

अनु०—हे प्राणवल्लभ ! ऐसा कब होगा जब यहाँ निकुंज प्रदेश में पुष्पों से बनाई गई विहार शय्या पर लेटे हुए, तथा मन्द-मन्द हँस कर प्रेमावेश से कौतुक विलास करने वाले आपके मुख में सुपाड़ी का चूर्ण डालती हुई मैं सेवा विनोद करूँगी ॥८९॥

०००००

**इत्युन्नद्धैः पशुपरमणीमण्डलीनां विलापैः**
**भूयोभूयः करुणकरुणैरद्य कीर्णान्तरस्य ।**
**उद्यद्बाष्पा त्यजति परितो रुद्धकर्णा कराभ्यां**
**दूरात् पान्थावलिरपि सखे ! यस्य सीमोपकण्ठम् ॥९०॥**
**( चतुर्दशभिः कुलकम् )**

टीका—हे सखे ! उद्धव इति, अनेन प्रकारेण उन्नद्धैर्विलापैः कीर्णान्तरस्य व्याप्तमध्यदेशस्य यस्य नन्दीश्वरस्य सीमाया उपकण्ठं पान्थावलिः पथिकश्रेणिरपि हस्ताभ्यां रुद्धकर्णा सती दूरादेव त्यजति ॥९०॥

अनु०—अब श्रीकृष्ण उद्धव से कहते हैं कि "हे सखे ! इस प्रकार गोपाङ्गनाओं के अत्यन्त विस्तृत तथा करुणा परिभावित विलापों से निरन्तर रूप से परिव्याप्त जिस ब्रज के सीमा प्रदेश को आँसू बहाती हुई तथा हाथों से कानों को बन्द करती हुई पथिकावली भी आज कल दूर से ही छोड़ देती है ॥९०॥

०००००

**युक्तं शृङ्गी कनकनिकरालिङ्गिताङ्गैस्तुरङ्गैः**
**दृष्ट्वा नन्दीश्वरतटभुवि स्यन्दनं ते मिलन्तम् ।**
**मामाशङ्क्य स्फुटमुपगतं सन्निधातव्यमारात्**
**धावन्तीभिस्तरलतरलं राधिकायाः सखीभिः ॥९१॥**

टीका—नन्दीश्वरतटभुवि मिलितं तव स्यन्दनं रथं दृष्ट्वा मामुपगतं समीपप्राप्तमाशङ्क्य राधिका-सखीभिः आरान्निकटे सन्निधातव्यं, रथं कीदृशं शृंगी कनकनिकरेण सुवर्णालङ्कारसमूहेनालिङ्गिताङ्गैस्तुरङ्गै र्युक्तम् ॥६१॥

अनु०—सुवर्ण जटित सींगों वाले घोड़ों से युक्त तुम्हारे रथ को नन्दीश्वर पर्वत के समीप आया हुआ देखकर तथा मेरे आने की स्फुट आशंका करके बहुत दूर से अत्यन्त तीव्रगति से दौड़ती हुई राधिका की सखियों के समीप तुम उस रथ को स्थापित करना ॥६१॥

००००

गोपालीनामपि वपुरलङ्कारलीलां दधानो
येषां नव्यः किसलयगणो रागिणं माञ्चकार ।
भ्राम्यद्भृंगावलिषु भवता तेषु शस्ताशिषां मे
वृन्दं वृन्दावनविटपिषु प्राज्ञ ! विज्ञापनीयम् ॥६२॥

टीका—हे प्राज्ञ ! भवता तेषु वृन्दावनविटपिषु मम आशिषां वृन्दं विज्ञापनीयं, येषां विटपिनां नवीनकिशलयगणः गोपीनां वपुषः अलङ्कारलीलां दधानः सन् मां स्वस्मिन् रागिणं अनुरागयुक्तं चकार॥६२॥

अनु०—हे प्राज्ञ ! वृन्दावन के जिन वृक्षों के नये-नये किसलयों ने गोपाङ्गनाओं के शरीरों को अलंकृत करते हुए मुझे अनुराग युक्त किया था, भ्रमरावलियों से गुंजरित उन वृक्षों को तुम मेरा शतशः आशीर्वाद कहना ॥६२॥

००००

मत्ता वंशीनिनदमधुभिस्तूर्णमास्तर्णकानां
या मुञ्चन्त्यः प्रणयमभितः सस्रुरश्रुप्लुताक्षः ।

तासामुच्चैर्मम परिपठन् कामतो नामधेयं
क्षेमं पृच्छेस्त्वमथ निचये नीचकैर्नैचिकीनाम् ॥६३॥

टीका—तासां नैचिकीनां निचये गवां समूहे त्वं क्षेमं पृच्छेः,याः नैचिक्यः तर्णकानां वत्सानां प्रणयं मुञ्चन्त्यः अतएव तूर्णकाः शीघ्राः सत्यः अभितश्चतुर्दिक्षु सस्नुः गमनं चक्रुः । अनुप्रासानुरोधात्तूर्णका इत्यत्र स्वार्थे कप्रत्ययस्य नापुष्टार्थत्वम् ॥६३॥

अनु०—हे उद्धव ! उसके पश्चात् मेरे वंशी स्वर की मधुरिमा से मतवाली बनी हुई, अपने वत्सों की आशक्ति को छोड़कर नेत्रों से अश्रु बहाती हुई जो गाएँ मेरे पास दौड़ी हुई आ जाती थीं, उन्हीं के समूह में तुम उच्च स्वर से मेरा नाम उच्चारण करके बाद में धीरे से उनकी कुशल पूछना ॥६३॥

०००० 

डिम्भव्यूहं हृतवति विधौ तत्तदाभस्तदाहं
स्तन्यं यासां मधुरमधयं वत्सरं वत्सलानाम् ।
वारं वारं मम नतिगणान् विज्ञ ! विज्ञापयेथाः
नम्रस्तासां जरठपशुपीमण्डलीनां पदेषु ॥६४॥

टीका—जरठा वृद्धाः ॥६४॥

अनु०—ब्रह्मा द्वारा वत्स समूह के हरण कर लिए जाने पर मैंने उस-उस वत्स स्वरूप होकर जिन प्रेमवती गायों का मधुर क्षीर पिया था, हे विज्ञ ! तुम नम्र होकर उन जराजर्जर गायों के चरणों में बार-बार मेरा प्रणाम कहना ॥६४॥

००००

आमोदं ते मधुर ! दधिरे मामहंपूर्विकाभिः
दूरे यान्तं कुसुमितवनालोकनाय स्पृशन्तः ।
श्रीदामाद्याः प्रियसहचरा हन्त मन्नामतस्ते
पौनः पुन्यान्निपुण ! भवता तुङ्गमालिङ्गनीयाः ॥६५॥

टीका—श्रीदामाद्याः कुसुमितवनालोकनाय दूरे यान्तं मां अहंपूर्विकाभिः स्पृशन्तः सन्तः आमोदं विदधिरे ॥६५॥

अनु०—हे मधुर ! कुसुमित वन को देखने के लिए बहुत दूर तक जाने वाले मुझको "मैं पहले स्पर्श करूँगा" इस प्रकार की स्पर्द्धा से छूने वाले श्रीदामा आदि मेरे प्रिय सहचर बहुत आनन्दित करते थे। हे निपुण ! तुम उन सहचरों को बार-बार मेरे नाम से दृढ़ालिंगन करना ॥६५॥

००००

हत्वा रङ्गस्थलभुवि मया धीर ! कंसं नृशंसं
काकूनिमश्रैः शपथशतकैः गोकुलं प्रेषितस्य ।
आनम्रस्त्वं चरणयुगलं बल्लवेन्द्रस्य कामं
नाम ग्राहं मम गुणनिधे ! वन्दमानो दधीथाः ॥६६॥

टीका—आनम्रस्त्वं बल्लवेन्द्रस्य चरणयुगलं वन्दमानः सन् दधीथाः ग्रहणं कुर्वीथा इत्यर्थः ॥६६॥

अनु०—हे धीर ! रंगभूमि में नृशंस कंस को मार कर काकूक्तिपूर्ण अनेक शपथ लेकर मैंने जिन ब्रजराज पिता नन्द को लौटाया था, हे गुणनिधे ! तुम नम्र बनकर मेरा नाम लेकर उस नन्द के चरण-युगल को धारण के साथ अर्थात् स्पर्श कर वन्दना करना। अर्थात् कृष्ण तुम्हारे चरणों में नमस्कार करता है ऐसा कह कर नमस्कार करना ॥६६॥

००००

तां वन्देथा मम सविनयं नामतः क्षामगात्रीं
आक्रोशन्तीं खलनरपतिं साङ्गुलीभङ्गमुच्चैः ।
अन्तश्चिन्ताविलुलितमुखीं हा मदेकप्रसूतिं
सर्व्वाङ्गैस्त्वं कलितवसुधालम्बमम्बां यशोदाम् ॥६७॥

टीका—खलनरपतिं कंसं साङ्गुलीभङ्गं यथा स्यात्तथा उच्चैः क्रोशन्तीं, चिंतया लुलितमुखीं, लुलमर्द्दने धातुः, मदेकप्रसूतिं, मदेकपुत्रां, सर्व्वाङ्गैः कलितवसुधालम्बं यथा स्यात्तथा वन्देथा ॥६७॥

अनु०—तुम मेरे नाम से "श्रीकृष्ण तुम को प्रणाम कर रहे हैं" ऐसा कहकर, उस कृशाङ्गी अंगुलि दिखाकर ( जिसने मुझे अपने धन कृष्ण से वंचित किया है, उस कंस का सर्व्वनाश हो, ऐसा कह कर ) दुष्ट कंसराज को अभिशाप देने वाली, अन्तः चिन्ता से विषण्ण मुख वाली, तथा मदेक पुत्रा ( मैं ही जिसका एक मात्र पुत्र हूँ ) किम्वा मेरी एक मात्र माता उस माता यशोदा को सविनय साष्टांग प्रणाम करना ॥६७॥

००००

या निःश्वासोद्गमवलयिनं हा रवं मुञ्चमाना
खेदोदग्रं मम गुणकथामन्तरेणान्तरेण ।
क्षामीभूता क्षितिपतिपुरी-वर्त्म विन्यस्तनेत्रा
बाष्पोद्गारस्नपितवसना वासराणि क्षिपन्ती ॥६८॥

टीका—तासां मम प्रियाणामन्तिकं त्वं बद्धाञ्जलिः सन् अनुसरेः इति तृतीयश्लोकेऽन्वयः । याः सुन्दर्यः मम गुणकथामन्तरेणान्तरेण गुणकथामध्ये खेदेनोग्रं हा रवं हा प्राणनाथ इति शब्दं मुञ्चमाचमानाः॥६८

अनु०—जो सब मेरे गुणों का संकीर्त्तन करते समय बीच-बीच

में अत्यन्त स्वेदपूर्ण तथा निश्वास पूर्ण "हा कृष्ण" इस प्रकार शब्द करती हुई, अत्यन्त क्षीण शरीर वाली, निरन्तर अश्रुपात से गीले वस्त्रों वाली तथा मथुरा के मार्ग पर ही एकटकी लगाकर देखने वाली हैं उन ब्रजाङ्गना के निकट तुम सविनय जाना ॥६८॥

००००

अक्रूराख्ये हृतवति हठाज्जीवनं मां निदाघे
विन्दन्तीनां मुहुरविरलाकारमन्तर्विदारम् ।
सद्यः शुष्यन्मुखवनरुहां बल्लवीदीर्घिकाणां
यासामाशामृदमनुसृताः प्राणकूर्मा वसन्ति ॥६९॥

टीका—अक्रूराख्ये निदाघे जीवनं जलरूपं मां हृतवति यासां बल्लवीरूपदीर्घिकाणां प्राणरूपाः कूर्माः आशारूपमृत्तिकामनुसृताः सन्तः वसन्ति। जलशोषणे सति दीर्घिका यथा अविरलाकारं अन्तर्विदारं प्राप्नुवन्ति तथैवान्तर्विदारं विन्दन्तीनाम् ॥६९॥

अनु०—अक्रूर नामक ग्रीष्म ऋतु के द्वारा मुझ जीवन (१-जल, २-प्राणभूत कृष्ण) के बलपूर्वक हर लिए जाने पर अविरलाकार (१-क्षीण आकार, २-दुर्बल शरीर) तथा अन्तर्विदार (१-जिन का अन्दर का भाग पानी न रहने के कारण चटख गया है, २-जिन गोपियों के हृदय विदीर्ण हो गये हैं) को प्राप्त करने वाली, सूखे हुए मुख कमलों वाली गोपियों रूप सरसियों के प्राणरूपी कछुए, आशा रूपी मृत्तिका में छिपकर रह रहे हैं। अर्थात् आशा के अवलम्बन से उनके प्राण बचे हुए हैं। (यहाँ रूपक अलङ्कार है) ॥६९॥

००००

तासां बद्धाञ्जलिरनुसरेरन्तिकं यन्त्रितात्मा
शंकाभिस्त्वं क्लमपरिणमद्विक्रियाणां प्रियाणाम् ।
दूत्यं कुर्व्वन्नसि गुणनिधे ! सापराधस्य यन्मे
भर्त्तुर्दोषादपि हि कुशला हन्त दुष्यन्ति भृत्याः ॥१००॥

टीका—तासां प्रियाणामन्तिकं बद्धाञ्जलिस्त्वं शंकाभिर्यन्त्रितः सन् अनुसरेः । सापराधस्य मम दूत्यं कर्त्तुं योग्योऽसि । भर्त्तुर्दोषाद् भृत्या अपि दुष्टा भवन्ति । अतः स्वदोषपरिहारायापि एवं यतनीयम् ॥१००॥

अनु०—हे गुणनिधे ! चूँकि तुम मुझ अपराधी के दूत बनकर जा रहे हो । अतः दुःख से विकृत अंग प्रत्यंग वाली उन गोपियों के समीप शाप के भय से आत्मसंयत होकर तथा हाथ जोड़ कर पहुँचना । क्योंकि निपुण भृत्य भी स्वामी के दोष से दूषित होते हैं ॥१००॥

००००

मन्नेपथ्यस्तबकितभवद्वीक्षणोत्ताकुलानां
तुङ्गातङ्कोत्तरलितमनः कल्पनाजल्पभाजाम् ।
तिष्ठन्नासां पथि नयनयो र्निःशलाकं गतानां
सन्देशं मे लघु लघु सखे ! हारिणं व्याहरेथाः ॥१०१॥
( त्रिभिः कुलकम् )

टीका—मन्नेपथ्यस्तबकितस्य मद्वेशयुक्तस्य भवतो वीक्षणोत्ताकुलानामासां नयनयोः पथि तिष्ठन् सन् मम सन्देशं व्याहरेथाः । कीदृशीनामुच्चशंकया उत्तरलितं यन्मनस्तस्य कल्पनया जल्पानि भजन्ते । पुनश्च निःशलाके व्यवधानाभावं गतानां प्राप्तानां, तथा च क्षीणां तथा स्वभावत्वात् परस्पराङ्गसंयुक्तीभूय स्थितानामित्यर्थः ॥१०१॥

अनु०—हे मित्र ! मेरी वेषभूषा से अलंकृत तुमको देख कर आश्चर्य्य में पड़ी हुई, व्याकुलिता, महान् शंका के कारण चंचल बने हुए मन की कल्पना से परस्पर बातचीत करने वाली तथा दौड़कर तुम्हारे समीप आने वाली उन व्रजबालाओं के सामने निर्बाधरूप से ठहर कर मेरे मनोहारी सन्देश को तुम धीरे-धीरे कहना ॥१०१॥

००००

यः कालिन्दीवनविहरणोद्दामकामः कलावान्
वृन्दारण्यान्नरपतिपुरं गान्दिनीयेन नीतः ।
कुर्व्वन् दूत्यं प्रणयसचिवस्तस्य गोपेन्द्रसूनोः
देवीनां वः सपदि सविधं लब्धवानुद्धवोऽस्मि ॥१०२॥

टीका—तस्य गोपेन्द्रसूनो दूत्यं वो युष्माकं सविधं लब्धवानहमुद्धवोऽस्मि ॥१०२॥

अनु०—यमुना के वनों में विहार करने की उत्कट अभिलाषा वाले तथा चौंसठ कलाओं के अधिष्ठान जिन कृष्ण को अक्रूर व्रज से मथुरा ले गए हैं, उन्हीं का प्रणय सचिव मैं उनका दूत बन कर तुम्हारे समीप आया हूँ और मेरा नाम उद्धव है ॥१०२॥

००००

तापोन्नद्धश्वसितपटलीदूयमानाधरश्रीः
मुक्तक्रीडो धवलिमधुराहिंगिण्डरक्तामगण्डः ।
स्मारं स्मारं गुणपरिचयं हन्त वः क्लान्तचेताः
सोऽयं कान्तः किमपि सरलाः सुन्दरं सन्दिदेश॥१०३॥

टीका—वो युष्माकं गुणरूपकल्पवृक्षस्य परिमलं स्मारं स्मारं क्लान्तचेतः सोऽयं कान्तः किमपि सन्दिदेश सन्देशं कथितवान् । कथंभूतः

धवलितमधुरा श्वेतिमातिशयस्तद्युक्तो यो हिण्डिर: पय: फेनास्तद्दिव कृशं गण्डस्थलं यस्य ॥१०३॥

अनु०—हे सरल हृदय गोपाङ्गनाओ ! विरह ताप जनित दीर्घ निश्वासों से मलिन अधर कान्ति वाले, क्रीड़ाओं को छोड़ देने वाले, पय: फेन की तरह अत्यन्त धवल गण्डस्थल वाले, तुम्हारे गुण कल्पवृक्ष को स्मरण कर करके व्यथित चित्त वाले उन तुम्हारे कान्त श्रीकृष्ण ने कुछ सुन्दर संदेश भेजा है ॥१०३॥

०००० 

कच्चिद्भीतिं न भजत मुहुर्दानवेभ्य: पुरावत्
कल्याणं व: सरलहृदया: ! कच्चिदुल्लालसीति ।
कच्चिद् यूयं स्मरथ सरसं तत्र चित्तानुकूलं
कुञ्जे कुञ्जे कृतमथ मया तञ्च सेवाप्रपञ्चम् ॥१०४॥

टीका—वो युष्माकं कल्याणं उल्लालसीति ॥१०४॥

अनु०—हे सरलहृदया गोपसुन्दरियो ! तुम सब पहले के समान राक्षसों से कहीं भयभीत न होना ! तुम सब का मंगल तो अतिशय रूप से होता है न ! उन कुंजों में तुम्हारे चित्तानुकूल तथा रसमयी मेरे द्वारा की गई उन सेवाओं का क्या तुम्हें स्मरण तो है ? ॥१०४॥

०००० 

नीतो यत्नाद्विविधविनयै र्बन्धनं बन्धुताभि:
कच्चु भूय: किमपि कुशलं पत्तने वर्त्तमान: ।
ध्यायं ध्यायं नवनवमहं सौहृदं व: सुकण्ठ्य: !
माद्योत्कण्ठाक्लमपरवशं वासराणि क्षिपामि ॥१०५॥

टीका — बन्धुलाभि र्बन्धुसमूहैः भूयः पुनरपि किमपि कुशलं कर्त्तुं अहं बन्धनं नीतः, अतएव गाढोत्कण्ठक्लमपरवशं यथा स्यात्तथा वासराणि क्षिपामि ॥१०५॥

अनु०—हे मञ्जुभाषिणी व्रजबालाओ ! माता-पिता आदि बन्धुओं ने यहाँ मुझे यत्नपूर्वक अनेक प्रकार के विनय से (प्रेम) बन्धन में डाल दिया है। फिर अपने सम्बन्धियों का कुछ हित साधन करने के लिए मैं नगर में ठहरा हुआ हूँ। परन्तु तुम सब के नित्य नवीन प्रणयको पुनः पुनः स्मरण करके अत्यन्त उत्कण्ठित होकर किसी प्रकार दिन काट रहा हूँ ॥१०५॥

००००

ज्ञातं ज्ञातं विरमतु चिरं त्वादृशीनां चरित्रं
याभ्यस्तीव्रा समजनि मनोभेदिनी वेदनेयम् ।
चक्रुर्वक्रं मयि किल तथा प्रेमपूरं भवत्यो
येनोद्भ्रान्तस्त्रुटिमपि बलादुत्सहे नाद्य नेतुम् ॥१०६॥

टीका—त्वादृशीनां चरित्रं मया ज्ञातं भूयो, विरमत याभ्यो भवतीभ्यः सकाशात् मम तीव्रवेदना समजनि । भवत्यस्तथा मयि प्रेमप्रवाहं चक्रुः येन प्रेमप्रवाहेन उद्भ्रान्तः सन् त्रुटिमपि कालं नेतुं न उत्सहे न शक्नोमि ॥१०६॥

अनु०—मैं आप सब के लोकातीत चरित्र को जानता हूँ, आप सब मुझे क्षमा कीजिए। आप सबने ही मेरे अन्दर यह अत्यन्त तीव्र मर्म विदारिणी वेदना पैदा की है। आप सब ने मेरे प्रति ऐसा वक्र प्रणय किया है कि जिसके कारण मैं विक्षिप्त चित्त हो रहा हूँ और मेरे लिए एक क्षण भी बिताना अत्यन्त कठिन हो रहा है। तात्पर्य्य यह है कि तुमने मेरे प्रति कुटिल-प्रेम किया है,

कुटिल प्रेम सर्वोपरि माना जाता है। जिस प्रेम में कुटिलता नहीं होती वह प्रेम अति सुख रूप नहीं होता ॥१०६॥

◇◇◇◇

रासोल्लासान् निशि निशि चिरं स्वप्नवृन्दापदेशात्
वृन्दारण्ये सुभगिभिणि मया सार्द्धमास्वादयन्ते।
भूयो भूयस्तदपि च परित्यागिनो दूषणं मे
शंसन्त्यः किं कुटिलहृदया! न त्रपन्ते भवत्यः ॥१०७॥

टीका—ननु यदूर्यात्रिशायां युष्माकं मया सह मिलनेन महती उत्कंठा समजनि तदाहं तत्तन्निशासु आविर्भूय भवद्भिः सह रासादिविलासान् करोमि, विलासानन्तरं मयि अन्तर्हिते सति भवद्भिस्तु तत्र सर्वं स्वप्नं मन्यते इत्येव युष्माकं दूषणमित्याह—रासेति स्वप्नवृन्दच्छलात् रासोल्लासान् मया सार्द्धं आस्वादयन्ति तथापि मम दूषणं शंसन्त्यो भवत्यो न त्रपन्ते ॥१०७॥

अनु०—हे कुटिल हृदय वाली व्रजबालाओ! सौरभमय वृन्दावन में तुम सब स्वप्नों के व्याज से मेरे साथ रासक्रीड़ाओं का प्रत्येक रात्रि में बहुत समय तक रसास्वादन लेती हो। तो भी बार-बार "श्रीकृष्ण ने हम को छोड़ दिया" इस दोष से मुझे दूषित करती हो। क्या ऐसा कहते हुए तुम्हें लज्जा का अनुभव नहीं होता? अर्थात् मैं अभिन्न रूप से तुम्हारे साथ रहता हूँ। तुम उसे स्वप्नादि समझ कर मुझे दोष देती हो, यह उचित नहीं है ॥१०७॥

◇◇◇◇

ते ते चन्द्रावलि! रसभरभ्रान्तनेत्रान्तमैत्री-
वैचित्रीभिस्त्रिभुवनजये दत्तहस्तावलम्बाः।

उत्सर्पन्तः स्मरणपदवीं हन्त ते भ्रूविलासाः
निःशङ्कं मे हृदयमधुना प्रांशवः स्रंसयन्ति ॥१०८॥

टीका—हे चन्द्रावलि ! तव प्रांशवः उच्चास्ते ते भ्रूविलासाः मम स्मरणपदवीं प्राप्तवतः सन्तः मे हृदयं निःशङ्कं यथा स्यात्तथा स्रंसयति खण्डयति । विलासाः कथंभूताः रसातिशयेन भ्रमिं प्राप्तो यो नेत्रान्तस्तेन सह या मैत्री तस्या वैचित्रीभिस्त्रिभुवनजयार्थं दत्तो हस्तावलम्बसाहाय्यं येभ्यस्ते ॥१०८॥

अनु०—हे चन्द्रावलि ! प्रेमातिशयता से घूर्णित उच्चतर अपाङ्गों के माधुर्य्य से युक्त तुम्हारे जिन भ्रूविलासों, तीनों लोकों को जीतने का हस्त अवलम्बन ( सहारा ) प्राप्त था, हाय ! वे ही भ्रूविलास अब मेरे स्मृति पथ में आकर हृदय को मथ डालते हैं ॥१०८॥

००००

तत्तन्वि ! स्मरसि विपिने फुल्लशाखे विशाखे !
कर्षन्नीवीं तव मुहुरहं वीक्ष्य वृद्धां मिलन्तीम् ।
कल्याणीं मे वितर कितवे ! हन्त चेलान्तराले
गुप्तां गुञ्जावलिमिति वदन् यद्विलक्षस्तदासम् ॥१०९॥

टीका—फुल्लाशा यत्र एवंभूते विपिने तव नीवीं कर्षन् अहं वृद्धां वीक्ष्य हे कितवे धूर्त्ते त्वया चेलाञ्चले गुप्तां मम गुञ्जावलीं वितर देहि इति वदन् तदा यत् विलक्षः विस्मयान्वित आसं अभवं एतत् किं स्मरसि ॥१०९॥

अनु०—हे कृशांगि ! विशाखे ! क्या तुम्हें वह सब याद है, जब एक बार मैंने विकसित वृक्षों वाले वन में बार-बार तुम्हारी वसन गाँठ को खींचते समय एक वृद्धा ( तुम्हारी सास आदि ) को आती हुई देख कर कहा था कि 'हे धूर्त्ते ! अपने वस्त्रों में छिपाई

गई मेरी सुन्दर गुंजामाला को वापिस लौटाओ" और उस समय मेरा मुख विलक्ष ( लज्जायुक्त ) हो गया था ॥१०९॥

००००

तां वैदग्धीपरिमलकथामुद्गिरन्ती सखीषु
क्लान्तिं दूरे क्षपयसि निजां हन्त धन्यासि धन्ये ! ।
ध्यायन्नाहं तमिह नगरे देवि ! लोकं विलोके
प्रीत्या यत्र व्यसनविधुरं व्यक्तमुन्मुद्रयामि ॥११०॥

टीका—वैदग्धीपरिमलविशिष्टां तां कथां सखीषु मध्ये उद्गीरन्ती त्वं निजां क्लान्तिं दूरे क्षपयसि अतएव धन्यासि । अहं तु इह नगरे तं लोकं न विलोके । व्यसनविधुरं दुःखेन क्लिष्टं वदनं उन्मुद्रयामि तथा च दुःखदूरीकरणार्थमुखव्यादानं कर्त्तुं न शक्नोमीत्यर्थं ॥११०॥

अनु०—हे देवि ! तुम चातुर्य्यपूर्ण उस कथा प्रसंग को अपनी सखियों से कह कर अपने विरह जनित संताप का परिहार कर लेती हो । वास्तव में तुम अत्यन्त पुण्यवती हो; परन्तु इस मथुरा नगरी में विचार करने पर भी मुझे ऐसा कोई स्थान नहीं दिखाई देता, जहाँ मैं अपने दुःख सन्ताप को प्रकट कर सकूँ ॥११०॥

००००

गम्भीराणि प्रमदगुरुभिर्गूढनर्मप्रबन्धैः
माध्वीकानां मधुरिममहाकीर्त्ति-विध्वंसनानि ।
सोत्कण्ठं मे स्मरति हृदयं श्यामले ! कोमलानि
प्रेमोत्तुङ्गस्मितपरिचितान्यद्य ते जल्पितानि ॥१११॥

टीका—हे श्यामले ! तव जल्पितानि मम सोत्कण्ठं हृदयं स्मरति, कथंभूतानि प्रमदेन हर्षेण गुरुभिः अत्युत्कृष्टैः गूढनर्मप्रबन्धैः गम्भीराणि ॥१११॥

अनु०—"हे श्यामांगि श्यामले ! उल्लास पूर्ण रहस्यमय नर्म कौतुकों के विस्तार से गंभीर, मधुओं की माधुर्य्यमयी कीर्त्ति का विध्वंस करने वाले, प्रेमपूर्ण मन्दस्मित से युक्त तुम्हारे उन मधुर आलापों को मेरा हृदय उत्कण्ठा के साथ आज भी स्मरण कर रहा है ॥१११॥

००००

पद्मे ! पद्मस्तुतमुखि ! लतासद्मनि छद्मनिद्रां
लब्धे लुब्धा मयि मुरलिकां हर्त्तुकामा त्वमासीः ।
धृत्वा पाणौ मुहुरथ मया कञ्चुकं लुञ्चता ते
यत्प्रारब्धं किमपि तदिदं स्वान्तमन्तः पिनष्टि ॥११२॥

टीका—पद्मैः स्तुतं मुखं यस्या तथाभूते, कपटनिद्रां मयि लब्धे सति कञ्चुकं लुञ्चता मया यत् किमपि प्रारब्धं अंतः स्वान्तं ममान्तःकरणं पिनष्टि ॥११२॥

अनु०—हे पद्म द्वारा प्रशंसित मुखवाली पद्मे ! एकबार मैं लता-गृह में कपटनिद्रा में लेटा हुआ था, उस समय तुमने लोभ में पड़ कर मेरी मुरली चुराने का यत्न किया। उसके बाद मैंने तुम्हारे दोनों हाथों को पकड़ कर कंचुली को खींचते हुए जो जो आचरण किये वे सब अब हृदय को पीस रहे हैं। अर्थात् उन बातों को स्मरण करके अब मेरा हृदय विदीर्ण हो रहा है ॥११२॥

००००

न्यस्ताङ्गी मे सुरभिणि भुजस्तम्भयोरन्तराले
भूयोभिस्त्वं रहसि ललिते ! केलिभिर्लालितासि ।
अन्तश्चिन्ताविधुरमधुना पांशुपुञ्जे लुठन्ती
हन्त म्लाना रचयसि कथं प्राणसन्धारणानि ॥११३॥

टीका—मम भुजस्तम्भयो र्मध्ये न्यस्ताङ्गी त्वं रहसि बहुभिः सम्भोगादिकेलिभि र्लालितासि । अधुना अन्तश्चिन्तया बिधुरं दुःखितं यथा स्यात्तथा लुठंती सती कथञ्चित् प्राणधारणानि करोसि ॥११३॥

अनु०—हे ललिते ! एकान्त में मेरे सौरभपूर्ण वक्ष पर लेटने वाली तुम्हारा अनेक क्रीड़ा सुखों द्वारा लालन हुआ है। हाय ! अब तुम मेरे विरह में आन्तरिक पीड़ा से दुःखी होकर धूलि में लोटती हुई तथा म्लान बनी हुई किस प्रकार प्राणों को धारण किए हुए हो ? ॥११३॥

◇◇◇◇

य: सेवाभिर्मुदमुदयिनीं तत्र भद्राङ्गि ! भद्रे !
नीतस्ताभिर्निशि निशि मनः कर्षिणीभिस्त्वयासीत् ।
स प्रेष्ठस्ते नवपरिचयादिङ्गितस्यानभिज्ञैः
कृष्णस्तूष्णीं पुरपरिजनैः सेव्यमानो दुनोति ॥११४॥

टीका—मनः कर्षिणीभिः सेवाभिर्यस्त्वया सह उदयिनीं मुदं नीतः प्राप्त आसीत् स तव प्रेष्ठः कृष्णः तूष्णीं यथा स्यात्तथा पुरपरिजनैः सेव्यमानः सन् दुनोति ॥११४॥

अनु०—हे चार्वङ्गि ! भद्रे ! उस वृन्दावन में तुमने मनको आकर्षित करने वाली सेवाओं द्वारा जिस कृष्ण को प्रत्येक रात्रि में अत्यन्त उल्लसित किया था वही तुम्हारा प्रियतम नवीन परिचय होने के कारण उसके हृदय के भावों को न जानने वाले नगर के परिजनों द्वारा चुपचाप सेवा किया जा रहा है और अत्यन्त पीड़ित है ॥११४॥

◇◇◇◇

सोढव्यं ते कथमपि बलाच्चक्षुषी मुद्रयित्वा
तीव्रोत्तापं हतमनसिजोद्दामविक्रान्तचक्रम् ।

द्वित्रैरेव प्रियसखि ! दिनैः सेव्यतां देवि ! शैव्ये !
यास्यामि त्वत्प्रणयचटुलभ्रू युगाडम्बराणाम् ॥११५॥

टीका—अहं द्वित्रैरेव दिनैः त्वत् प्रणयचटुलभ्रू युगाडम्बराणां सेव्यतां यास्यामि ॥११५॥

हे शैव्या-देवि ! तुम किसी भी प्रकार नेत्र मूँद कर दुर्द्धान्त काम के तीव्र सन्ताप कारी पराक्रम को सहन कर ले जाना। हे प्रियसखि ! दो तीन दिन में ही मैं तुम्हारे प्रणय चंचल भ्रू विलासो की सेवा में उपस्थित होऊँगा ॥११५॥

००००

इत्थं तासामनुनयकलापेशलः क्लेशहारी
सन्देशं मे कुवलयदृशां कर्णपूरं विधाय।
त्वं मच्चेतो भवनवडभी-प्रौढ़पारावतीं तां
राधामन्तःक्लमकवलितां सम्भ्रमेणाजिहीथाः ॥११६॥

टीका—पेशलश्चतुरः मम सन्देशं कर्णपूरं कर्णभूषणं विधाय मदीयचित्तरूपभवनस्य अटालि इति प्रसिद्धा या वडभी तत्र स्थितां प्रौढ़पारावतीस्वरूपां राधां आजिहीथा आगच्छेः ॥११६॥

अनु०—इस प्रकार उन गोपियों को प्रसन्न करने की कला में चतुर तथा उनके संतापों को दूर करने वाले तुम मेरे सन्देश को उन नीलोत्पलनयना व्रजयुवतियों के कर्णपूर अर्थात् उनसे कह कर मेरे चित्त रूपी भवन वडभी (अटाली) की प्रगल्भ कपोती तथा आन्तरिक सन्ताप से अभिभूत उस राधा के समीप आदर के साथ जाना ॥११६॥

००००

सा पल्यङ्के किशलयदलैः कल्पिते तत्र सुप्ता
गुप्ता नीलस्तवकितदृशां चक्रवालैः सखीनाम् ।
द्रष्टव्या ते कृशिमकलिताकण्ठनालोपकण्ठ-
स्पन्देनान्तर्वपुरनुमितप्राणसङ्गा वराङ्गी ॥११७॥

टीका—नीरेण जलेन स्तवकिता युक्ता दृक् यासां सखीनां चक्रवालैःमण्डलैः गुप्ता कण्ठनालस्य समीपस्थितस्पन्देन हेतुना अन्तर्वपुः शरीरमध्ये अनुमितः प्राणसंगो यस्याः सा ॥११७॥

अनु०—वहाँ किसलय रचित पर्यङ्क पर सोई हुई, अश्रुप्लुत नेत्रों वाली सखियों द्वारा सेवा की जाती हुई तथा अत्यन्त दुर्बल कंठ नाल में स्पन्दन की विद्यमानता से इसके शरीर में प्राणवायु है ऐसा अनुमान की जाती हुई वरांगी राधिका तुम्हें दिखाई देगी॥११७॥

०००

सख्युर्लक्ष्मीभुवि मतमुरीकृत्य दूरीभविष्णोः
धत्ते प्राणाननुपदविपद्विद्धचित्तापि साध्वी ।
मुक्तच्छाया मुहुरसुमनाः क्षौणिपृष्ठे लुठन्ती
बद्धापेक्षं विलसति गते माधवे माधवीयम् ॥११८॥

टीका—माधवे वसन्ते गते इयं माधवी राधिका, हे लक्ष्मीभुवि दूरीभविष्णोः सख्युः मम मतमुररीकृत्य अनुपदं प्रतिक्षणं विपद्विद्धचित्ता सती प्राणान् धत्ते, कृष्णपक्षे छाया कान्तिः, न विद्यते शोभनमनो यस्याः॥११८॥

अनु०—वह साध्वी माधव (वसन्त) के चले जाने पर माधवी लता की भाँति पक्षान्तर में माधव (सखा श्रीहरि) मेरे दूर चले जाने पर माधवी राधा प्रतिक्षण विपदाक्रान्त चित्ता होकर प्राणों को किसी प्रकार धारण कर रही है और मुक्तच्छाया अर्थात् छाया

रहित (असहाया) (कृष्णपक्ष में-कान्तिरहित) बलापेत, अशोभन मन वाली वह पृथ्वीपर लेट रही है ॥११८॥

◇◇◇◇

मालां मैत्रीविदुर ! मदुरः सङ्गसौरभ्यसभ्यां
बासन्तीभिर्विरचितमुखीं पञ्चवर्णां गृहाण ।
आरूढायाः परिणतिदशां तादृशीं सारसाक्ष्याः
साक्षादेतत्परिमलमृते कः प्रबोधे समर्थः ॥११९॥

टीका—हे मैत्रीविदुर मैत्र्या ज्ञात "विद् ज्ञाने", मदुरः स्थलसंगसौरभ्यस्य सभ्यां सभ्यतया आस्वादिकां मालां गृहाण, तादृशीं परिणतिदृशामारूढायास्तस्याः प्रबोधे एतत्परिमलं विना कः समर्थः ॥११९॥

अनु०—हे सौहृदय अभिज्ञ ! मेरे वक्षःस्थल के संसर्ग से सौरभमयी, नवमल्लिका के फूलों से गूँथी गई तथा पाँच वर्ण वाली इस माला को तुम ग्रहण करो। साक्षात् इस माला की सुगन्धि के अलावा और कौन वस्तु हो सकती है जो उस कमलनयना को होश में ला सके जो इस चरमदशा को पहुँच गई है ॥११९॥

◇◇◇◇

माल्यामोदव्यतिकरबहिर्बोधितायाः सबाष्पं
नेत्रद्वन्दं दिशि दिशि मुहुर्विक्षिपन्त्या विलक्ष्यम् ।
तस्याः प्रोद्यत्पुलककलिकादन्तुरायाः पुरस्तात्
मन्दं मन्दं विनयमसृणस्त्वं विनम्रो जिहीथाः ॥१२०॥

टीका—माल्यस्यामोदसमूहे बहि बोधितायास्तस्या अग्रे विनयेन मसृणः कोमलः सन् जिहीथाः, कीदृश्याः विलक्ष्यं विस्मयान्वितं नेत्रद्वन्द्वं दिशि दिशि विक्षिपन्त्याः प्रोद्यत् पुलकरूपकलिकया दन्तुरायाः मुकुलितायाः इति पर्य्यवसितार्थः ॥१२०॥

अनु०—माला के अमोद मे होश में आकर अश्रु पूर्ण अपने दोनों नेत्रों से बार बार इधर उधर देखती हुई तथा पुलकांचित शरीर-वाली उस राधिका के सामने तुम विनय पूर्वक अवनत होकर धीरे धीरे जाना ॥१२०॥

◇◇◇◇

धृत्वा मालां किशलयततेरञ्चले न्यञ्चदङ्गो
भ्रूसंज्ञाभिः सपदि सचिवीकृत्य तस्या वयस्याः ।
दूत्यं स्वस्य प्रणयहृदयस्त्वं निवेद्यानवद्यं
धीमन् ! सद्यो मम कथयितुं वाचिकं प्रक्रमेथाः ॥१२१॥

टीका—किशलयततेरञ्चले माल्यं धृत्वा न्यञ्चदंगः संकुचदङ्गः सन् स्वस्य दूत्यं निवेद्य वयस्याः ललिताद्याः सखीः ॥१२१॥

अनु०—हे प्राज्ञ ! माला को हाथ में लेकर किशलयशय्या के समीप बैठे हुए प्रेमपूर्ण हृदय वाले तुम भ्रू संज्ञा द्वारा शीघ्र ही उसकी सखियों को सहायक बनाकर अपने पवित्र दूत कर्म को निवेदन करना। उसके पश्चात् तुरन्त ही मेरे संदेश को भी कहने का उपक्रम करना ॥१२१॥

◇◇◇◇

यः सर्वस्मात्तव किल गुरुस्त्वञ्च यस्यासि धीरे !
प्राणेभ्यस्त्वं प्रणयवसति र्यस्य यः स्यात्तवापि ।
स त्वां धृत्वा मनसि विधुरे हन्त सन्धुक्षमाणः
कृष्णस्तृष्णाचटुलचटुलं देवि ! सन्देदिशीति ॥१२२॥

टीका—यस्तव सर्वस्मात् प्राणादेः सकाशात् गुरुः प्रेमास्पदत्वेन श्रेष्ठः, एवं त्वं च यस्य सर्वस्मात् गुरुरसि स श्रीकृष्णः विधुरे विलष्टे मनसि त्वां धृत्वा संधुक्षमाणः जीवन् सन् तृष्णापटलेन चञ्चलं यथा स्यात्तथा संदेदिशीति पुनः पुनः सन्देशं कथयति ॥१२२॥

अनु०—हे धीरे ! जो तुम्हें अपने सभी गुरुजनों की अपेक्षा अधिक पूज्य है, और उसी प्रकार तुम भी जिसकी पूज्यतमा हो, जो तुम्हें अपने प्राणों से भी अधिक प्रिय है तथा वह भी तुम्हें अपने प्राणों से अधिक प्यार करता है, हे देवि ! विरह ज्वाला में जलते हुए उन्हीं कृष्ण ने अपने कातरमन में तुम्हें धारण करके लालसा से अत्यन्त चंचल होकर बार बार यह सन्देश भेजा है ॥१२२॥

००००

नीते शोषं विरहरविणा सर्वतो हृत्तड़ागे
जाने कण्ठस्थलविलुठितप्राणमीनासि तन्वि !
दूरे सम्प्रत्यविरलसुहृन्मारुतै र्वारितोऽहं
तृष्णाम्भोधौ विलसदमृतालंकृतः किं करिष्ये ॥१२३॥

टीका—अविरलसुहृत् निविडसुहृद्वसुदेवाक्रूरादिः तद्रूपैर्मरुद्भिः दूरे वारितो प्रापितोऽहं कृष्णरूपो मेघः अधुना किं करिष्ये 'धातु गति शुद्धयो.' मेघपक्षे विलसदमृतेन जलेनालंकृतः, कृष्णपक्षे विलसन्माधुर्य्यादिरूपामृतेनालंकृतः ॥१२३॥

अनु—हे तन्वि ! विरह सूर्य्य के द्वारा तुम्हारे हृदय रूपी सरोवर के सब ओर से सुखा दिए जाने पर, मैं यह अच्छी तरह जानता हूँ कि, तुम्हारे प्राणमीन कंठस्थल पर तड़प रहे हैं अर्थात् तुम कंठगतप्राणा हो रही हो। इधर मुझे इस समय प्रेम रखने वाले वसुदेव, अक्रूरादि अनेक बन्धुओं रूपी हवाओं ने बहुत दूर रोक लिया है। मैं इस समय तृष्णारूपी समुद्र में जलतरंगावलि में डूब गया हूँ और यह समझ नहीं पड़ता कि क्या करूं ? ॥१२३॥

००००

नायं स्वप्नो निशि निशि भवेद् यत् त्वया सङ्गतिर्मे
पश्याम्मोदं विधुमुखि ! निराबाधमास्वादयामि ।
किन्तु ज्ञातं त्वयि विजयते काचिदाकृष्टिविद्या
यां शंसन्ती हरसि तरसा मामदूराद् यदूनाम् ॥१२४॥

टीका--हे सुमुखि ! तव संगजन्यं निराबाधमामोदं अहमास्वादयामि, त्वमपि कथं नास्वादयसि इत्येव मम खेदः, किन्तु ज्ञातं काकृष्टिविद्या त्वयि विजयते यां विद्यां शंसन्ती पठन्ती त्वं मां यदूनां अदूरात् निकटात् वेगेन हरसि ॥१२४॥

अनु०--हे चन्द्रवदने ! जो प्रत्येक रात्रि में तुम्हारा और मेरा मिलन होता है उसे तुम स्वप्न न मानना; क्योंकि, देखो, मैं यहाँ तुम्हारी सुगन्धि का अनवरत गति से आस्वादन किया करता हूँ अथवा (दूसरे अर्थ में) हे चन्द्रवदने ! मुझे तुम्हारी विरहवेदना से रात्रि में नींद तक नहीं आती जिससे कि स्वप्न में ही तुम्हारा और मेरा मिलन हो सके और इस प्रकार मैं निरन्तर रूप से सन्ताप का अनुभव किया करता हूँ। किन्तु तुम्हारे अन्दर आकृष्ट करने की कोई विद्या है, यह मैं अच्छी तरह जानता हूँ। उस विद्या का जप करती हुई तुम मुझे बलपूर्वक यदुवंशियों के पास से अपनी ओर आकर्षित करती रहती हो ॥१२४॥



लब्धान्दोलः प्रणयरभसादेष ताम्रोष्ठि ! नम्रः
प्रम्लायन्तीं किमपि भवतीं याचते नन्दसूनुः ।
प्रेमोद्दामप्रमदपदवीसाक्षिणीशैलकुञ्जे
द्रष्टव्या ते कथमपि न सा माधवी कुञ्जवीथी ॥१२५॥

टीका--हे ताम्रोष्ठि ! प्रणयवेगात् लब्धान्दोला प्राप्तचाञ्चल्यः एष नन्दसूनुः नम्रः सन् किमपि याचते ॥१२५॥

अनु०—हे रक्तोष्ठि ! प्रणय के वेग के कारण आन्दोलित चित्त वाला, यह नन्दनन्दन नम्र होकर अत्यन्त मुरझाती हुई तुम से कुछ प्रार्थना करता है। पर्वत कुञ्ज में जो वह वासन्तीलता की कुञ्ज-वीथी है तथा जिसने हमारे प्रेम के उद्दाम विलास का साक्षात्कार किया है, उसे तुम किसी प्रकार भी न देखना तात्पर्य यह है कि उसके देखने से प्रणय स्मृति जागृत होने पर तुम्हें अत्यन्त पीड़ा होगी, अतः उसे न देखने का मेरा आग्रह है ॥१२५॥

००००

बिन्दन् वंशीस्फुरितवदनो नेत्रवीथीमकस्मात्
अन्तर्बाधाकवलितधियो धातुभिर्धूमलोऽहम् ।
क्रीड़ाकुञ्जे लुठितवपुषः श्रान्तमानन्दधारा-
कल्लोलैस्ते रहसि सहसोत्फुल्लमुल्लासयिष्ये ॥१२६॥

टीका—अन्तर्बाधाकवलितधियस्तव अकस्मान्नेत्रवीथीं विदन् सन् धातुभिर्गैरिकाद्यै धूमलः कृष्णलोहितोऽहं तव स्वान्तं उल्लासयिष्ये।१२७

अनु०—गैरिकादि धातुओं से कृष्णलोहित (धूमलित) शरीर वाला तथा वेणु का मधुर स्वर करता हुआ मैं अकस्मात् तुम्हारे दृष्टिपथ में आकर आन्तरिक सन्ताप के कारण लुप्त-संज्ञा वाली तथा क्रीड़ाकुञ्ज के अन्दर लोटने वाली तुम्हारे अवसन्न अंगों को आनन्दधाराओं की तरंगों से एकाएक उस निर्जन स्थान में उल्लसित करूँगा ॥१२७॥

००००

प्रेमोन्नाहादहमपिवहन् वाष्पधारामकाण्डे
गण्डोत्सङ्गे स्मरपरिभवैः पाण्डुरे दत्तचुम्बः ।
कुर्व्वन्कण्ठग्रहविलसितं नन्दयिष्यामि सत्यं
सान्द्रेण त्वां सहचरि ! परिष्वङ्गरङ्गोत्सवेन ॥१२८॥

टीका—प्रेम्णः उत्साहात् प्राचुर्य्यात् बाष्पधारामभिवहन् अकाण्डे अनवसरे तत्र गण्डोत्सङ्गं दत्तचुम्बः ॥१२८॥

अनु०—हे सहचरि ! मैं प्रेम की अतिशयिता के कारण सहसा आँसुओं की धारा बहता हुआ, काम के उद्रेक से पीले पड़े हुए तुम्हारे गण्डदेश को चूमता हुआ निश्चय ही उस निर्जन स्थान पर तुमको गाढ़ आलिंगन रसोल्लास से आनन्दित करूँगा॥१२७।

इत्थं तीव्रव्यसनजलधेः पारसीमामिवासां
सन्देशैर्मे धृतगरिमभिर्दर्शयन् दूरदर्शी ।
भूयः कुर्वन् कुवलयदृशां तत्र चित्तानुकूलं
कालं कञ्चित् त्वमतुलमते ! गोकुलान्तर्नयेथाः ॥१२८।

टीका—इत्थं अनेन प्रकारेण आसां तीव्रदुःखरूपजलधेः पारस्य सीमां दर्शयन् दूरदर्शी दीर्घदर्शी अतिविज्ञस्त्वमित्यर्थः । हे अतुलमते ! ॥१२८॥

अनु०—हे दीर्घदर्शी महाप्राज्ञ (अतुल बुद्धि वाला) उद्धव ! इस प्रकार मेरे गरिमामय सन्देशों से इन गोपाङ्गनाओं को उस अपार दुःख समुद्र की पार सीमा दिखाना तथा फिर उन कमलाक्षियों के मन को प्रसन्न करते हुए गोकुल में कुछ काल निवास करना ॥१२८॥

गोपेन्द्रस्य व्रजभुवि सखे ! केवलं यात्रया ते
नार्थः सिध्येन्मम बहुमतः किन्तु वाढं तथैव ।
प्रेमोल्लासं परिकलयता गोपसीमन्तिनीनां
स्मर्त्तव्या मे सपदि भवता भारतीसारतेयम् ॥१२९॥

टीका—हे सखे ! व्रजभुवि ते यात्रया ममैव बहुमतोऽर्थः केवलं न सिद्ध्येत् किन्तु वाढं अतिशयेन तथापि सिद्ध्येत् । प्रेमोल्लासं परिकलयता भवता मम इयं भारती सारता वाक्यसारत्वं सपदि तत्क्षणे स्मर्त्तव्या ॥१२९॥

अनु०—हे सखे ! नन्द की उस व्रजभूमी की यात्रा से केवल मेरा ही स्वार्थ सिद्ध होगा ऐसी बात नहीं है, इससे तो तुम्हारी भी अत्यन्त स्वार्थसिद्धि होगी। वहाँ उन गोपांगनाओं के प्रेमोल्लास को देखने वाले आपको मेरी इस वाणी की सारवत्ता तुरन्त ही स्मरण हो आवेगी अर्थात् उनके प्रेमोल्लासों के दर्शन से तुम अत्यन्त चरितार्थ होगे ॥१२६॥

गोष्ठक्रीड़ोल्लसितमनसो निर्व्यलीकानुरागात्
कुर्वाणस्य प्रथितमथुरामण्डले ताण्डवानि ।
भूयो रूपाश्रयपदसरोजन्मनः स्वामिनोऽयं
तस्योद्दाम बहतु हृदयानन्दपूरं प्रबन्धः ॥१३०॥

इत्युद्धवसन्देशाख्यप्रबन्धः
समाप्तः ।

टीका—स्वामिनः श्रीसनातनगोस्वामिनः श्रीकृष्णस्य च आनन्दपूरं बहतु । रूपस्य मम आश्रणीयं पदकमलं यस्य, कृष्णपक्षे रूपस्य सौन्दर्यस्य आश्रणीयम् । अन्यत्समानम् ॥१३०॥

समाप्ता चेयमुद्धवसन्देशटीका ।

अनु०—यह प्रबन्ध, निष्कपट प्रणय से गोष्ठ के अन्दर की जाती हुई क्रीड़ा से उल्लासमय मन वाले, प्रसिद्ध मथुरामंडल में नृत्य करने वाले, प्रचुर रूप शोभा के आधार चरण कमल वाले स्वामी श्रीकृष्ण के हृदय को अत्यधिक आनन्द से आप्लावित करदे। पक्षान्तर में—यह प्रबन्ध निष्कपट प्रणय से गोष्ठ के अन्दर की हुई क्रीड़ा से उल्लसित मन वाले, प्रसिद्ध मथुरामण्डल में नृत्यशील, ( विराजमान ) रूप नाम से प्रसिद्ध मेरे आश्रय स्वरूप चरण-कमल वाले अग्रज, स्वामी ( श्रीसनातन गोस्वामी ) के हृदय को अत्यन्त आनन्द से आप्लावित करदे ॥१३०॥

# गौड़ीयग्रन्थगौरव:—

## ब्रजभाषा में प्रकाशित प्राचीन पुस्तकें-



१. गदाधरभट्टजी की वाणी
२. सूरदासमदनमोहनजी की वाणी
३. माधुरीवाणी (माधुरीजी कृता)
४. वल्लभरसिकजी की वाणी
५. गीतगोविन्दपद (श्रीरामरायजी कृत)
६. गीतगोविन्द (रसजानिवैष्णवदासजी कृत)
७. हरिलीला (ब्रह्मगोपालजी कृता)
८. श्रीचैतन्यचरितामृत (श्रीसुबलश्यामजी कृत)
९. वैष्णववन्दना (भक्तनामावली) (वृन्दावनदासजी कृता)
१०. विलापकुसुमाञ्जलि (वृन्दावनदासजी कृता)
११. प्रेमभक्तिचन्द्रिका (वृन्दावनदासजी कृता)
१२. प्रियादासजी की ग्रन्थावली
१३. गौराङ्गभूषणमञ्जावली (गौरगनदासजी कृता)
१४. राधारमणरससागर (मनोहरजी कृता)
१५. श्रीरामहरिग्रन्थावली (श्रीरामहरिजी कृता)
१६. भाषाभागवत (दशम, एकादश, द्वादश) (श्रीरसजानि-वैष्णवदासजी कृ
१७. श्रीनरोत्तमठाकुरमहाशय की प्रार्थना
१८. संप्रदायबोधनी (कविवरमनोहरजीकृता)

पुस्तक मिलने का पता—

**(१) मोतीराम गुप्ता, भगवान भजन आ**

बड़ीगंज, (वृन्द

मुद्रक—रमनलाल बंसल, पुष्पराज प्रेस, मथुरा

# हंस-दूतम्

## श्रीलरूपगोस्वामिप्रभुपादविरचितम्

पण्डितप्रवरश्रीगोपालचक्रवर्तिविरचितया
टीकयालंकृतम्
पं० हरिकृष्णकमलेशमहोदयेन विरचितेन
गद्यानुवादेन तथा च
श्रीपन्नालालजी (प्रेमपुञ्ज) महाशयेन विरचित-
पद्यानुवादेन परिबृंहितम्

प्रकाशकः—
**कृष्णदासः**
( कुसुमसरोवरनिवासी )
मथुरा

त्तिः १०००
२०१४
—२॥)

# ❀ प्रस्तावना ❀

देवाचार्यं यं विदुः सत्कवित्वे पाराशर्यं तत्त्ववादे महान्तम् ।
श्रृङ्गारार्थव्यञ्जने व्यासूनुं स श्रीरूपः पातु नो भृत्यवर्गान् ॥

( बलदेवः )

हंसदूताख्यदूतकाव्यमिदं महाभगवतः राधागोविन्दमिलितविग्रहस्य, कलिपावनावतारस्य, प्रेमप्रदानायावतीर्णस्य श्रीकृष्णचैतन्यदेवस्य पार्षदप्रवरेण, कविमुकुटमणिना श्रीमद्रूपगोस्वामिचरणमहोदयेन प्रणीतमिति गाथा रसिकहृदयक्षेत्रेषु जीवनतना नरीनर्त्ति । श्रीमद्रूपगोस्वामिपादः विक्रमाब्दस्य पञ्चदशशतके वंगदेशान्तर्गतमुर्शिदाबादखण्डे 'रामकेलि' नाम्नि ग्रामे दाक्षिणात्यब्राह्मणवंशे आविर्बभूव । अस्य महोदयस्य पूर्वजानां वंशवृक्षः क्रमतः इत्थभूतः—(१) कर्णाटभूमिपतिः श्रीसर्वज्ञः, (२) सकलयजुर्वेदस्योपदेष्टा अनिरुद्धदेवः (३) तस्यानिरुद्धस्य द्वयोर्महिष्योः सकाशात् रूपेश्वरहरिहरौ, (४) शिखरदेशराज्यनिवासिनः श्रीरूपेश्वरस्य समस्त-यजुर्वेद-उपनिषद्विद्याविलसितजिह्वः पद्मनाभ आसीत्,(५) नैहाटिनिवासिनः, गुणसमुद्रस्य,यशस्विनः पद्मनाभमहोदयस्य अष्टादश कन्याः पुरुषोत्तम-जगन्नाथ-नारायण-मुरारि-मुकुन्ददेवनामानः पञ्च पुत्राश्च आसन्, (६) सर्वकनिष्ठमुकुन्दस्य श्रीमान् कुमारदेव आसीत्, (७) वंगदेशनिवासिनः तस्य कुमारदेवस्य त्रयः पुत्रा बभूवुः । तेषु श्रीसनातनो ज्येष्ठः श्रीरूपो मध्यमः श्रीअनुपमश्च कनिष्ठ आसीत् ।

श्रीमद्रूपसनातनौ तदानीन्तनवंगदेशाधिपस्य नृपतेः हुसेनशाहस्यामात्यपदमलचक्रतुः । महाप्रभोः श्रीचैतन्यदेवस्य महानुकम्पया तत्पदं गार्हस्थ्यं च तृणवत् परित्यज्य तदादेशतो झटिति वृन्दावनं गत्वा करंग-कौपीनधारिणौ वृक्षतलनिवासिनौ च भूत्वा विरेजतुः । श्रीमद्रूपगोस्वामिपादः कृष्णभक्तिरसभूषितान् बहु ग्रन्थान् समये रचयाञ्चकार । तेषु रसपरिपाटीवर्णने सिन्धुरिव "श्रीभक्तिरसामृतसिंधुः" जगन्मण्डले

रसिकजनहृदयवेद्यान् मर्म्मीकृत्य सर्वोपरि वरीवर्त्ति। भगवद् राधागोविन्दयोरप्राकृतशृङ्गाररसवर्णने "उज्ज्वलनीलमणि" रेव अद्वितीय-महोच्चतमो ग्रन्थराजः साहित्यभण्डारेऽपि नरीनर्त्ति। अपरं तु व्रजलीलाविषयवर्णनापरकं 'विदग्धमाधवनाटकम्' द्वारकालीलाविषयकवर्णनपरं 'ललितमाधवनाटकञ्च' जगद्विख्याते। पुनश्च ग्रन्थकारेण "दानकेलिकौमुदी" नाम्नी राधागोविन्दयोः दानलीलाविस्तारवर्णनकारिणी भाणिकाऽपि व्यरचि। भरतमुनिनिर्म्मितं "नाट्यशास्त्रं" रससुधाकरादिकं च दृष्ट्वा श्रीरूपपादेन "नाटकचन्द्रिका" नाम्नी नाट्यलक्षणमयी अपूर्व्वा पुस्तिका विरचिता। तन्निर्म्मिता "स्तवमाला"पि राधागोविन्दयोः स्तवादिवर्णने अत्यद्भुता भवति। भगवद्स्वरूपतत्त्वनिर्णये परमद्भुतं ग्रन्थरत्नं 'लघुभागवतामृतं' कोऽपि न जानाति? श्रीराधाकृष्णगणोद्देशदीपिकाऽपि सगण-श्रीराधागोविन्दयोः सेवापरिपाटी-व्यवहार्य्यद्रव्य-स्थानादीनां वंशावल्यादीनां च परिचये महती प्रसिद्धा।

मथुरामण्डलान्तर्गत-वनोपवनादीनां संक्षेपतः वर्णनपरकं "मथुरामाहात्म्य" मपि सर्वोत्तमं भवति। "श्रीकृष्णजन्मतिथिविधि" रपि जन्माभिषेकादौ परमावश्यकः स्यात्। तद्विरचिता "प्रयुक्ताख्यचन्द्रिका"पि व्याकरणशास्त्रसम्बन्धी संक्षिप्तग्रन्थो दृश्यते। तन्निर्म्मितं "हंसदूताख्यं" दूतकाव्यं सहृदयरसिकहृदयेषु महत्कौतूहलं चमत्कारद्विव्यविप्रयोगरसपोषणं च निर्बाधं ददाति अस्मिन् न सन्देहता। उद्धवसन्देशनामा दूतकाव्यप्रबन्धोऽपि न केषुचित् आश्चर्य्यतारतम्यं विरहरसवैचित्र्यं च ददाति?

तन्निर्म्मिते उद्धवसन्देशाख्ये दूतकाव्ये नायकचूडामणिना श्रीकृष्णेन मथुरातो द्वारकातो वा उद्धवद्वारा विरहविधुराणां गोपाङ्गनानां सर्वेषां व्रजवासिनां वा सान्त्वनाय दौत्यं प्रेष्यते। श्रीमद्भागवते "गच्छोद्धव! व्रजं सौम्य! पित्रो नः प्रीतिमावह। गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय", "सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः" इत्यादि

श्लोकानवलम्ब्य अत्र ग्रन्थकारस्य रसिकजनहृदयपरिपोषिणी महती चेष्टा संदृश्यते। तत्र केन रूपेण कं सन्देशं नीत्वा केन मार्गेण मथुरातो वृन्दावनं गन्तव्यं कुत्र वा केन रूपेणात्रस्थैर्य किं कर्त्तव्यं का वा दशा वर्णनीया इत्यादिकं उद्धवं प्रति स्पष्टतः वर्णनं नास्ति। अत तान् स्पष्टयितुं श्रीरूपगोस्वामिपादैरिदं उद्धवसन्देशाख्यं दूतकाव्यं व्यरचि। अत्र श्रीकृष्णेन स्वयं उद्धवाय गमनमार्गं वर्ण्यते। तद्यथा— प्राक् गोकर्णाख्यशिवस्थलं (१) तदनु—यमुनासरस्वतीसङ्गमः, (२) ततः कालीयहृदपरिसरं, (३) तस्माद्ब्रह्महृदः, (४) ततः यज्ञस्थलं, तदनु-कोटिकाख्यस्थलं (६) ततः सटीकराख्यबकडगोविन्दस्थलं, (७) तदनन्तरं बहुलावनं (८) ततः गोकुलं, (९) शाल्मलवनं च, (१०) तदनु—साहाराख्यं, (११) ततः रहेलाख्यं, (१२) ततः सौयान्त्रिकस्थलं, (१३) तदनु-गोष्ठाङ्गनवर्णनं, (१४) तदनन्तरं पुर-प्रवेशनमित्यादिकम्।

## हंसदूतस्य कथासारोऽयं—

कठिनमतेः दानपतेः गान्दिनीनन्दनस्याक्रूरस्यानुरोधेन गोपी-हृदयानन्दने कमलवदने श्रीकृष्णे मथुरायां गते सति एकस्मिन् दिवसे व्रजललनामौलीरत्नरूपिणी महाविरहिणी राधिका विरहजनि-तान्तर्दाहप्रशमनेच्छुका सखीसहिताऽऽनन्दरहिता च सती यमुनातटं गतवती। तत्र पूर्वपरिचितानि कुञ्जकुटीरादीनि दृष्ट्वाऽधिकतरकातर-वेगेनाक्रान्ता च मूर्च्छां प्राप। तस्याः प्राप्तजडतां इत्थंभूतां दशां दृष्ट्वा तत्प्रा-णरक्षार्थं गृहीतनलिनीदलचन्दनानां सखीकदम्बानां हा हेति शब्दसहिता नानाप्रतिक्रिया जाता। ताः सर्व्वा चंदनलेपितायां नलिनीदलशय्यायां तां स्थापयित्वा परिवव्रु विलापयामासुश्च। ततः प्रेमवलिता श्रीललिता शीतलयमुनाजलमानेतुं यमुनातटं त्वरितगत्या चलिता। विरहविकी-र्णहृदया सा तत्र मधुरविरुतं श्वेतगरुतं सहसा ददर्श एवं हरिसदसि सन्देशप्रेषणाय निजमनसि तं श्रेष्ठदूतरूपेण निश्चयामास। हंसं उप-

लक्षीकृत्य ललितया यानि विरहदशामयानि वचनानि व्यक्तीकृतानि तानि श्रीरूपपादेन हंसदूताख्येन दूतकाव्यरूपेण श्लोकबन्धं ग्रथयित्वा प्रकटीकृतानि । राधिकाप्रेष्ठतमासख्याः श्रीरूपमञ्जर्याः अवतारस्वरूपे श्रीरूपे ऽत्र न कापि असम्भवसम्भावना ।

प्राक् प्रणयवेगचलितया ललितया मथुरागमनाय हंसं प्रति मार्गे-याणि स्थानानि उद्दे शीकृतानि तेषां क्रमपरिपाटी इत्थंभूता–प्रथमतः येन मार्गेण अक्रूरेण श्रीकृष्णो मधुपुरीं नीतः तेन जगत्प्रसिद्धमार्गेण हंसाय गन्तुमुक्त्वा तदनन्तरं क्रमतः चीरघाटस्थ कदम्बवृक्षश्चैवं, तन्निकटे रासस्थली, तत्र वासन्ती विरचितानङ्गोत्सवकला चतुःशाला, ततः गि-रिगोवर्द्धनस्तदुपत्यकायां कदम्बवाटिका, ततः कियद्दूरे शुष्कमरिष्टासुर-मस्तकं, ततः भाण्डीरवटः, तन्निकटे ब्रह्मस्तुतिस्थली, तदनु-कालीयह्रद-स्ततः वृन्दावनाधिष्ठातृवृन्दादेविका, ततः एकादशवनानि तदनन्तरं वृन्दावनमिति । एतान् दृष्ट्वा दृष्ट्वा क्रान्त्वा क्रान्त्वा च मथुराप्रवेशनं निर्दिष्टम् । अनन्तरं मथुरायाः शोभैश्वर्यवर्णनं,ततः मथुरानागरीणा-मुल्लासकथनं विह्वलतावर्णनं च । तत्र श्रीकृष्णस्यान्तः पुरवर्णनं तदनु-उद्धवहस्ते समर्पितस्य शुकयुगलस्य सुखाद् राधिकायाः सखीनां च संवादश्रवणकथनं, ततः क्रीडागृहवर्णनं, तदनु–यथावसरे गोपीनां राधिकायाः वा वार्त्तानिवेदनाय उपदेशस्ततः श्रीकृष्णस्य रूपमाधुरी-वर्णनं,तदनु-व्रजवासिनां दशाकथनमित्यादिकम् । प्रायशः मेघदूतादारभ्य समस्तदूतकाव्यं मन्दाक्रान्ताछन्दसा विरचितम् । इदं तु शिखरिणी-छन्दसमालम्ब्य विरचितमिति भेदः । अस्मिन् काव्ये शब्दालङ्कारप्राचु-र्यस्य महती चर्या, लालित्यपदानां सुचलितता ऽनुप्रासशब्दकदम्बानां घटाडम्बरसंघटना च यादृशी दृश्यते नान्यत्र सा उपलभ्यते । 'अगाधायां बाधामयपयसि राधा विरहिणी' (२) "भवानग्रे तस्मिन्नवदलकदम्बेन निबिडे–कदम्बे कादम्बेश्वर पथि" (१६) "तदन्ते श्रीकान्तस्मरसमर-धाटी पुटकिता कदम्बानां वाटी रसिकपरिपाटी स्फुटयति (२४) "इग-

"स्भोगम्भीरीकृतमिहिरपुत्रीलहरिभिः, विलीनाधूलीनामुपरि परिवब्रे परिजनैः" (४) इत्यादि नानाशब्दानुप्रासघटनयाऽयं अलंकृतः काव्य-पुरुषस्य परमसौष्ठवतां प्रकाशयति ॥

अस्य ग्रन्थरत्नस्य "श्रीलगोपालचक्रवर्त्ती विरचितेयं प्राचीना टीका कुशस्थली ( कोसी ) स्थितगोमतीतटनिवासिनः "श्रीलभगवानदास" बाबाजिमहोदयतः उपलब्धाऽऽसीत् । नानाचेष्टयाऽपि अस्य द्वितीय-प्रतिलिपी अप्राप्ता । 'चंदेरी' ग्रामनिवासिना श्रीमता "श्रीधीरेन्द्रदास" महोदयेनापि प्रचुरपरिश्रमेण एक प्रतिलिपी लिखित्वा मह्यं दत्ता । "दीर्घपुर" ( डीग ) निवासिना, बन्धुवरेण श्रीहरेकृष्णकमलेशमहोद-येन यथासमये अस्य गद्यानुवादं कृत्वा मह्यं प्रकाशनार्थं यद् दत्तं तदुपकारं न विस्मृतपथमगमत् । "स्वर्गीयमुन्शीपन्नालाल" (प्रेमपुञ्ज) महोदयेन विरचितं नाना छन्दसाऽलंकृतं अतिसुमधुरं अस्य पद्यानुवादं तत्पुत्रवरात् "श्रीविहारीलालगर्गान्" उपलब्धमासीत् ।

अस्मिन् देशे बहूनि दूतकाव्यानि दृश्यन्ते श्रूयन्ते च । तानि काक-दूत-पादपदूत-मनोदूत-पवनदूत-उद्धवदूत-कोकिलसन्देश - चकोरसन्देश-मेघसन्देश-हंससंदेश-कोकसन्देशादीनि । तेषु विष्णुदासेन विरचितं मनो-दूतं,धोयीकविना विरचितं पवनदूतं,वादिचन्द्रेण विरचितं पवनदूतकाव्यं, माधवकवीन्द्रविरचितं उद्धवदूतं, वेदान्ताचार्य्यकृतः हंससन्देशः विष्णु-त्राताविरचितः कोकसन्देशः एतानि दूतकाव्यानि प्रसिद्धानि ।

गौड़ीयग्रन्थरत्नकोषागारेऽपि श्रीमद्रूपचरणैर्विरचिते हंसदूत-उद्धव-सन्देशाख्ये इमे द्वौ दूतकाव्ये एवं श्रीकृष्णदेवसार्वभौमेन विरचितं 'पदाङ्कदूतं', श्रीनन्दकिशोरगोस्वामिना विरचितं 'शुकदूताख्यं' विशाल-दूतकाव्यं च समष्टितः चत्वारि दूतकाव्यानि विराजन्ते । इमानि सर्वाणि श्रीकृष्णरसपोषकाणि भवन्ति । एषु प्राकृतरसस्यावकाशो नास्ति ।

यद्यपि कविश्रेष्ठेन कालिदासेन विरचितं प्राकृतरसवैभववर्णनपरकं 'मेघदूताख्यं' दूतकाव्यं प्राचीनतया लोकोत्तरचमत्कारकतया च रसिके-

प्रशंसितं तदपि 'प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव तत्र विभावादीनां वैरूप्यात्', "साधुकाव्यनिषेवणात्", 'न यद्वचश्चित्रपदं हरे यशो जगत्पवित्रं प्रगृणीत कर्हिचित्। तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्षया', 'तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि। नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः", श्रीरुक्मिणीदेवीवाक्येऽपि—त्वक् श्मश्रु रोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट् कफपित्तवातम्। जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्रीति' नाना प्रमाणबलात् तत्र प्राकृते रसं निषिध्य पुनः"रसो वै सः""रसं ह्येवायं लब्ध्वानन्दी भवति" "सैषानन्दस्य मीमांसा भवती"त्यारभ्य मानुषानन्दतः प्राजापत्यानन्दपर्यन्तं दशकृत्वा शतगुणिततया क्रमेण तेषामानन्दोत्कर्षपरिमाणं प्रदर्श्य पुनश्च ततोऽपि शतगुणत्वेन परब्रह्मानन्दं प्रदर्श्यापरितोषात् यतो वाचो निवर्त्तन्ते इत्यादिश्लोकेन तदानन्दस्यानन्त्यमेव स्थापितम्", 'नित्यरसः', 'सर्वरसः', 'अखण्डरसबोधः','सर्वरसकदम्बः', 'अखिलरसामृतमूर्त्तिः' इत्यादिनानावचनबलेन अप्राकृते भगवद्वस्तुनि एव रसत्वमन्यत्र रसाभासत्वं निश्चितम्। अतः अस्य श्रीउद्धवसन्देशहंसदूताख्यदूतकाव्यद्वयस्य निर्माणेन रसिकान् महाविप्रलम्भमयानन्दस्वरूपेण रसेन नित्यभगवद्रसे निमज्जयितुं ग्रन्थकारस्य महान् प्रयत्नः। तस्मात् प्राकृतनायकादिवर्णनपरात् मेघदूतात् अनयोः हंसदूतोद्धवसन्देशयोः महद्वैशिष्ट्यम्। रसस्य 'ब्रह्मास्वादसहोदर' धर्मात् तत्तु मोक्षे पर्य्यवसानात् तस्मादनन्तगुणिते आनन्दस्वरूपे भगवद्वस्तुनि एव रस्यत्वरसत्वं न तु मेघदूतादिवर्णिततुच्छनायक-नायिकाद्यनुभवस्मरणकीर्त्तनादेः, प्रत्युतं तत्तु पापावहत्वमेव। न तु प्राकृतनायकनायिकाविषयमवलम्ब्य केषाञ्चित् मोक्षं स्यात्। जीवस्याणुरूपतया तमालम्ब्यानन्दस्याणुरूपेण पर्य्यवसानात्। आनन्दसागरस्य भगवतः आश्रयात् तस्य अखण्डरसास्वादनमवश्यमेव स्वीकार्य्यम्। अस्तु अस्मिन्

दूतकाव्ये व्रजवासिनां विप्रलम्भमयचरममहारसवैभवविलासं दर्शयित्वा श्रीरूपपादः काव्यास्वादनचतुरान् सहृदयरसिकान् किञ्चित् किञ्चित् परिवेषयित्वा आस्वादयामास। यं प्राप्य सर्वे कृतार्था अभवन् इति अलमतिविस्तरेण।

## पद्यानुवादक की संक्षिप्त जीवनी—

इनका जन्म कस्बा फरह जिला मथुरा में सन् १८५५ ई० सम्वत् १९१२ विक्रम के श्रावण मास में हुआ था। आप गर्ग गोत्री अग्रवाल वैश्य थे आपको १४ वर्ष की अवस्था में ही आपके पिता लाला मुकुन्द-रामजी स्वर्गवास कर गये। मुन्शी जी ने इस अपनी अनाथ बाल्या-वस्था में ही अत्यन्त साहस और परिश्रम के साथ अपने पठन पाठन का चालू रखा।

एतमादपुर जिला आगरा में लगभग ३२ साल हिन्दी वर्नाक्यूलर मिडिलस्कूल के हेडमास्टर रहे। मुंशीजी को बाल्यावस्था से ही हिन्दी साहित्य से प्रेम था। काव्य, अलङ्कार, नाटक, नायिकाओं के भेद इत्यादि सम्बन्धी अनेक ग्रन्थों का और हिन्दी के प्राचीन कवियों का कविताओं का इन्होंने भली भाँति मनन किया था। अपनी हेडमास्टरी के समय ही में इन्होंने समस्याओं की पूर्त्ति करना प्रारम्भ कर दिया था। कविता में अपनी छाप "प्रेमपुंज" अथवा "पुंज" डाला करते थे। पैनसन लेने के पश्चात् आप आगरा में रहने लगे। वहाँ श्रीयुत अ-योध्याप्रसाद जी पाठक (वकील) से आपका परिचय हुआ। आप नागरीप्रचारिणीसभा आगरा में कविसम्मेलन उत्सव पर उपस्थित होते थे तथा वहाँ की कविताओं की समस्याओं की पूर्त्ति करके ले जाते थे। इनकी कविताओं की पूर्त्ति की बहुत प्रशंसा होती थी। उस समय आपने कविता में "स्वतन्त्रवनिता विनाश" नामक एक पुस्तक लिखी थी, जिसको महेन्द्रजी ने महावीर-प्रेस किनारी बाजार आगरा से छप-वाया था। इनको आयुर्वेदिक और यूनानी हिकमत की भी पूर्णयोग्यता

थी। आगरा के वैद्य और हकीम लोग इनसे रोगियों की नाड़ी परीक्षा करा कर कठिन रोगों में इनसे सम्मति किया करते थे। आप बड़े परोपकारी थे एवं बिना शुल्क रोगियों की चिकित्सा किया करते थे। आपका गोलोकवास तारीख २५ मई सन् १६२४ को हुआ था। इस "हंसदूत" काव्य के भाषानुवाद का उत्साह उनको स्वर्गीय राधाकुंड निवासी पण्डित मोहनलालजी गोस्वामी जी ने दिलाया था। उनके प्रोत्साहन प्राप्त होकर आपने इस ग्रन्थ का हिन्दी पद्य और गद्य में भाषानुवाद किया था। इसका अनुवाद मिती श्रावण शुक्ला द्वादशी चन्द्रवार संवत् १६७८ विक्रम में समाप्त हुआ था। आपने स्वयं इस अनुवाद को लेकर वृन्दावन में गोस्वामी राधाचरणजी महाराज को तथा और भी अनेक सज्जनों को सुनाया। सब ने इस अनुवाद की बड़ी प्रशंसा की। आपके सुपुत्र श्रीबाबू लीलाबिहारीलाल गर्ग, रिटायर्ड सुपरिन्टेन्डेन्ट टेलीग्राफ कोठी केवलसहाय, बेलनगञ्ज आगरा ने इसके प्रकाशन के लिये बड़ी प्रसन्नता के साथ हमें प्रदान किया। परन्तु इस संस्करण में हम केवल "पद्यानुवाद" का प्रकाशन में समर्थ हुए।

अन्त में मैं उत्तर प्रदेश सरकार का विशेष आभारी हूँ कि इस ग्रन्थ के प्रकाशन में अर्थ सहायता देकर मुझे उत्साहित किया।

कृष्णदास
कुसुमसरोवर वाले,
( मथुरा )



# गद्यानुवादक का संक्षिप्त परिचय–



कविराज पं० श्रीहरिकृष्ण "कमलेश" का शुभ जन्म सम्वत् १६९० में दीर्घपुर ( दीग ) भरतपुर राज्य में ब्राह्मण वंशावतंस स्वरूप प० चोखारामजी मिश्र के यहाँ हुआ। आपके पिता एक अच्छे पौराणिक पण्डित थे; किन्तु आपके जीवन पर पिताजी के अतिरिक्त पितामह श्रीशालिग्राम जी का अच्छा प्रभाव पड़ा। वह एक अच्छे पण्डित तथा सरल एवं कट्टर सनातन-धर्मी व्यक्ति थे। बचपन से आप में "साधु-सेवा" की प्रवृत्ति पैदा हो गई एवं आपकी रुचि "हिन्दी" "संस्कृत" तथा "बँगला" में तीव्रतम होती गई। आपने घर पर ही शिक्षा प्राप्त कर "संस्कृत" में अच्छी योग्यता प्राप्त की तथा परीक्षायें भी दी। "संस्कृत" की उत्सुकता से आपने कई विद्वान् गुरु-चरणों में आश्रय प्राप्त किया और "बँगला" में सतत स्वाध्याय के अध्यवसाय में लगे रहने से अच्छा ज्ञान प्राप्त किया। "हिन्दी" की तो आप पर एक "वत्सलमाता" की भाँति कृपा ही थी; फलतः आप १२–१३ वर्ष की वयस में ही कविता करने लगे। अतश्च आपके हितैषीवर्ग ने आपको इस ओर प्रेरित किया। आपकी रचनायें अनेक दैनिक, साप्ताहिक तथा मासिक पत्र-पत्रिकाओं में निकलती रहीं, यदा-कदा आप "खड़ी बोली" में भी गल्प तथा कवितायें लिखते रहे और सन् १६९२ में मथुरा में श्रीराधेश्याम कथावाचक के साथ आपको भी "गौड़ महासम्मेलन" ने "कविरत्न" की उपाधि से विभूषित किया। किन्तु बाद में उस साहित्यिक दौड़ में आपने शान्त रहकर ही "भारती" की आराधना करना श्रेष्ठ समझा और आज भी अविच्छिन्न रूप से चल रहा है। हिन्दी के अतिरिक्त तामिल, तेलगू, उर्दू आदि भाषाओं में भी आपकी रुचि है।

"कविराज" का व्यवसाय भी आपने कतिपय गुरु-चरणों की छत्र-छाया में रहकर सीखा। आपने इस क्षेत्र में भी प्रौढ़ तथा सफल

सिद्धहस्तता प्राप्त की अतएव आपका "यश" भरतपुर के चारों ओर फैला हुआ है। आपने प्रारम्भ में श्रीवल्लभाचार्य जी गोस्वामी कामवन वालों के यहाँ चिकित्सक का कार्य किया और "आनन्दाद्रि" में प्रथम राजपूताना वैद्य सम्मेलन का आयोजन एवं सफलता आपके प्रयासों का ही प्रतिफल है। इस समय अपने रचनात्मक कार्य के अलावा "स्वागत कविता" आदि से भारत के विभिन्न भागों से आये विद्वानों को मन्त्रमुग्ध किया बाद में आपने यह कार्य स्वतन्त्र रूप से किया और "वैद्यवर" आदि २ उपाधियाँ प्राप्त कीं और आज भी आप 'आयुर्वेद' की सेवा में तत्पर हैं। इस प्रकार "आयुर्वेद" संस्कृत तथा हिन्दी का अध्यापन भी आपने अपने निवास-स्थान पर किया।

वास्तव में भरतपुर तथा प्रधानतः डीग क्षेत्र में आप ही एक प्रथम समाज-सुधारक तथा साहित्यिक के रूप में आये। आपने इस क्षेत्र में "श्री हिन्दी-पुस्तकालय डीग" तथा "श्रीसुधारिणी समिति जुरहरा" जैसी अनुकरणीय संस्थाओं की स्थापना अपने सहयोगी वर्ग की सफलता से की और "तन-मन-धन" से सेवा करते हुए पुष्कलदान दिया तथा प्राम २ से एवं सम्बन्धी मात्र से दिलाया। इसके अलावा सामयिक-सुधार के लिये आपने "ब्राह्मण-मण्डल" तथा "नवयुवक मण्डल डीग" आदि की स्थापना की।

आपका अध्यवसाय पूर्ण जीवन, साधारण वेशभूषा "Simple living high thinking" का प्रतीक है। सरलता तथा मृदुता की प्रतिमूर्ति हैं। आज भी आप ६३ वर्ष की उम्र में "ब्रज-भाषा" की सेवा में रत हैं, क्योंकि श्रीसत्यनारायणजी कविरत्न जैसे व्यक्ति की हितैषिता, साहचर्य तथा प्रेरणा का ही यह प्रभाव है। शतशः नवयुवकों के प्रेरणा के स्रोत श्रीकविराज जी का "हिन्दी-साहित्य" विशेषतः "ब्रज-साहित्य" की सेवा की दृष्टि से महत्वपूर्ण स्थान है। "शृङ्गारवट" (वृन्दावन) गोस्वामी जी से आपने गोपाल मन्त्र की दीक्षा ली है।

(कृष्णदास)

# ❀ भूमिका ❀

०००००

गौड़ीय संप्रदाय के जिन भक्त कवियों ने उत्तर-मध्यकाल में ब्रज-भूमि को अपनी सरस रचनाओं से आप्लावित किया उन में रूप और सनातन—इन दो गोस्वामी बन्धुओं का गौरवपूर्ण स्थान है। संस्कृत में इनकी अनेक भक्ति-विषयक रचनाएँ मिली हैं, जो काव्य-सौष्ठव और भावप्रवणता की दृष्टि से उच्चकोटि की हैं। राधा माधव की मधुर लीलाओं का विविध रूपों में जो वर्णन इन दोनों महानुभावों ने किया है वह कितना सुन्दर है, इसे रस-मर्मज्ञ ही समझ सकते हैं।

रूप गोस्वामी ने 'हंसदूत' तथा 'उद्धव-संदेश' नामक दो दूत-काव्य भी लिखे। इन दूत-काव्यों की शैली वही है जो कालिदास के 'मेघदूत' या धोयी के 'पवनदूत' में मिलती है। 'हंसदूत' में राधा की प्रिय सखी ललिता द्वारा हंस पक्षी को राधा की व्यथा का संदेश-वाहक बनाने का वर्णन है। परन्तु दूसरे ग्रन्थ "उद्धव-संदेश" में श्रीकृष्ण द्वारा उद्धव को गोपियों के पास भेजना वर्णित है। गौड़ीय साहित्य में कुछ अन्य दूतकाव्य भी मिले हैं। इनमें श्रीनन्दकिशोर-चन्द्र गोस्वामी का 'शुकदूत' तथा श्रीकृष्णदेव सार्वभौम का 'पदांकदूत' उल्लेखनीय हैं। 'शुकदूत' में विरही कृष्ण द्वारिका से शुक पक्षी को दूत बनाकर ब्रज में राधा के पास भेजते हैं। यह १० सर्गों का बड़ा ग्रन्थ है। 'पदांकदूत' केवल ४५ श्लोकों का लघु ग्रन्थ है। इसके प्रारम्भ में आया है कि राधाजी ने एक दिन यमुना-तट पर श्रीकृष्ण के चरण-चिह्न को देखा। उन्होंने उसी से प्रार्थना की कि वह श्रीकृष्ण के पास जाकर उनसे राधा का विरह निवेदन करे।

उक्त चारों ग्रन्थ संस्कृत की दूत-काव्य परम्परा का सम्यक् निर्वाह तो करते ही हैं, साहित्यिक दृष्टि से भी ये पठनीय हैं। इनमें न केवल

राधा-कृष्ण के प्रगाढ़ प्रेम की और विरह-जनित विविध मनोभावों की मार्मिक अभिव्यक्ति है अपितु प्रकृति-वर्णन, व्रजादि जनपदों के भौगोलिक वर्णन भी अत्यन्त सुन्दर हैं। 'शुक-दूत' में द्वारिका नगरी का वर्णन इस प्रकार किया गया है—

चलत्पताकांशुविलासभासितां विहंगकर्णस्पृहणीयभूषिताम्।
दिनेऽपि बाला: सुभ्रचन्द्रभासितां समुद्रमध्यावयवेषु भासिताम्॥
( १२० )

इस ग्रन्थ के प्रथम सर्ग में वन तथा सरोवर का हृदयहारी वर्णन है। वन के वर्णन में पुष्पित लता-वृक्षों का सुन्दर चित्र खींचा गया है, जिसमें शब्दालंकारों की छटा दर्शनीय है—

मुकुलिता कुलिता भ्रमरोत्तमैः कवलिता वलिता दलसंचयैः।
स्तवकिता चकिता पिकझंकृतैर्जलता ललिता सुरभौ वभौ॥
( १।३५ )

इस ग्रन्थ में रैवतक पर्वत, बिंदु-सरोवर, सरस्वती नदी, उज्जयिनी, पुष्कर, मथुरा, गोवर्द्धन, प्रेम-सरोवर आदि के रोचक वर्णन हैं। पाँचवें और छठे सर्ग मे राधा की विरह-व्यथा का प्रभावोत्पादक चित्रण मिलता है। शब्द और अर्थ दोनों प्रकार के अलंकार स्थान-स्थान पर उपलब्ध हैं।

रूप गोस्वामी जी द्वारा लिखित 'उद्धव-संदेश' १३१ श्लोकों का ग्रन्थ है। इसमें आदि से अन्त तक मन्दाक्रान्ता छन्द का प्रयोग हुआ है। इस ग्रंथ में भी द्वारका और व्रज के बीच के अनेक स्थानों का वर्णन है। व्रज के स्थानों में अम्बिका वन, कोटिक तीर्थ, सट्टीकर ( छटीकरा ), गरुड़ गोविन्द, कालियह्रद, शेषशायी, महार आदि के वर्णन उल्लेखनीय हैं। एक स्थान पर व्रज के गोवत्सों का अत्यन्त सजीव आलेखन हुआ है। चपल बालकों के हाथों से अपनी पूँछ

छुड़ाकर उछलने वाले बछड़े और बछिया कितने सुन्दर लगते हैं, देखिए—

धावद्‌बालावलिकरतलप्रोच्चलद्‌वालधीनां
यत्रोत्तुङ्गस्फटिकपटलस्पर्द्धिदेहद्युतीनाम् ।
घ्रायं घ्रायं नवतृणशिखां मुञ्चतीनां वलन्ते,
वत्सालीनां चटुलचटुलं शश्वदाढ़ीकनानि ॥२४॥

'उद्धव-सन्देश' में विरह-वर्णन उत्कृष्ट कोटि का मिलता है। एक गोप-बाला का कथन सुनिए जिसमें उसने अपना हृदय खोलकर रख दिया है। वह वियोग के दुःख को अधिक दिन तक सहने में कितनी असमर्थता का अनुभव करती है और वृन्दावन के लता-वृक्ष उसे किस प्रकार कृष्ण के साथ रास-विलास की बातों का स्मरण कराते हैं:—

"आशापाशैः सखि ! नवनवैः कुर्वती प्राणबन्धं,
जात्या भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्,
उत्फुल्लास्तान्मम किल बलान्मर्म निर्मूलयन्ति ॥ ८२ ॥

'हंसदूत' रूप गोस्वामी जी का दूसरा दूत-काव्य है। इसमें कुल १४२ श्लोक हैं। इसके सभी छंद शिखरिणी में हैं। मंगलाचरण के बाद कथा का प्रारम्भ होता है। राधा के विरह-संताप का वर्णन बड़ा ही मार्मिक है। उनकी प्रिय सखी ललिता द्वारा एक हंस को संदेशवाहक बनाया गया है। 'सज्जनों से कभी याचना विफल नहीं जाती', ऐसा हंस से कहकर ललिता उसे कृष्ण के पास जाने के लिए उद्यत करती है—

पवित्रेषु प्रायो विरचयसि तोयेषु वसतिं
प्रमोदं नालीके वहसि विशदात्मा स्वयमसि ।

अतोऽहं दुःखार्ता शरणमबला त्वां गतवती
न याञ्चा सत्पद्मे व्रजति हि कदाचिद् विफलताम् ॥४॥

उक्त वर्णन को देखकर कालिदास के यक्ष की याद आ जाती है, जो मेघ से कहता है—

"याञ्चा मोघा वरमधिगुणेनाधमे लब्धकामा ।"

( पूर्वमेघ, ६ )

हंस को मार्ग का वर्णन बताते हुए ललिता उससे कहती हैं—"जामुन के से रंग वाले यमुना जल को पीते हुए, चंद्-किरणों के तुल्य कमल-नालों का भक्षण करते हुए, सघन पत्रों वाले वृक्षों की डाली पर बैठकर विश्राम का आनंद लेते हुए तुम मथुरा नगर जाना। ( श्लोक, १४ )

१८ वें श्लोक में रास-स्थली का सुन्दर वर्णन है, जहाँ कृष्ण ने गोपियों के साथ हल्लीशक नृत्य किया था, आगे गिरिराज गोवर्द्धन तथा उसके समीप तमाल वृक्षों का वर्णन है, जहाँ चंचल शबरी वनिताएँ श्रीकृष्ण की विरहाग्नि से तप्त थीं। इसके पश्चात् वृन्दावन, भांडीरवट, कालियदह, वृन्दादेवी आदि स्थानों के मनोरंजक चित्रण हैं। ग्यारह वनों को लाँघने के बाद आम के वृक्षों से सघन मधुवन का उल्लेख है, जहाँ मथुरा नगरी बसी है। मथुरा में सखियों की दशा का मनोहारी वर्णन ३३वें श्लोक के आगे मिलता है। श्रीकृष्ण की मधुर लीलाओं का स्मरण करती हुई सखियों के आलाप और चेष्टाओं का, विशेषकर राधा की विरह-व्यथा का वर्णन कवि ने अत्यन्त भावपूर्ण ढंग से किया है। राधिका का विरहालाप चेतन ही नहीं, जड़ को भी रुलाने में समर्थ है।

पूरा काव्य श्रीरूप गोस्वामी जी के पांडित्य और भक्ति-निष्ठा का परिचायक है। वर्णन की सरस एवं प्रवाहमयी शैली आदि से

अन्त तक देखने को मिलती है । प्रस्तुत रचना निस्सन्देह परवर्ती संस्कृत काव्य की मूर्धन्य रचनाओं में गणनीय है ।

पुस्तक का सम्पादन बाबा कृष्णदास ने जिस ढँग से किया है वह सराहनीय है । प्रत्येक श्लोक के बाद उसकी विस्तृत संस्कृत टीका और हिन्दी अनुवाद दिया गया है । इसके अतिरिक्त प्रत्येक श्लोक का एक मुखोल्लास दोहा, मूल का छंदोबद्ध हिन्दी अनुवाद तथा सोरठा के रूप में सारांश भी दिया गया है । इस प्रकार प्रत्येक श्लोक की पूरी व्याख्या मूल के साथ उपलब्ध है । पद्यानुवाद में ब्रज-भाषा का ही प्रयोग किया गया है, जो बहुत सरल है ।

अभी तक यह सुन्दर काव्य ग्रंथ हिन्दी के पाठकों के लिए सुलभ नहीं था । इस प्रकाशन द्वारा यह कमी दूर हो गई है और रूप गोस्वामी की सरस रचना का आस्वादन अब केवल हिन्दी जानने वाले भी कर सकेंगे । यह हर्ष की बात है कि रूप गोस्वामीजी के दूसरे दूत-काव्य 'उद्धव-सन्देश' का भी प्रकाशन हिंदी अनुवाद के सहित बाबा कृष्णदासजी ने करा दिया है । आशा है कि इसी प्रकार 'शुक-दूत' तथा 'पदांक-दूत' भी सानुवाद शीघ्र प्रकाशित होंगे ।

मथुरा ।
१२—४—२७

—कृष्णदत्त बाजपेयी,
अध्यक्ष, पुरातत्त्व संग्रहालय ।



## सानुवाद संस्कृत भाषा में—

१. अर्चाविधिः (संगृहीत)
२. प्रेमसम्पुटः (श्रीविश्वनाथचक्रवर्त्तीजीकृत)
३. भक्तिरसतरङ्गिणी (श्रीनारायणभट्टजीकृता)
४. गोवर्द्धनशतक (श्रीविष्णुस्वामी संप्रदायाचार्य्य श्रीकेशवाचार्य्य कृत)
५. चैतन्यचन्द्रामृत और सङ्गीतमाधव (श्रीप्रबोधानन्द-सरस्वतीजी कृत)
६. नित्यक्रियापद्धतिः (संगृहीत)
७. व्रजभक्तिविलासः (श्रीनारायणभट्टजी कृतः)
८. निकुञ्जरहस्यस्तवः (श्रीमद्रूपगोस्वामी कृत)
९. महाप्रभुग्रन्थावली (श्रीमन्महाप्रभुमुखपद्मविनिर्गता)
१०. स्मरणमङ्गलस्तोत्रं (श्रीमद्रूपगोस्वामिजीकृत)
११. नवरत्नं (श्रीहरिरामव्यासजी कृत)
१२. श्रीगोविन्दभाष्यं (श्रीपादबलदेवजी कृत)
१३. ग्रन्थरत्नपञ्चकम्
(१) श्रीकृष्णलीलास्तवः (श्रीपादसनातनगोस्वामि कृतः)
(२) श्रीराधाकृष्णगणोद्देशदीपिका (श्री श्रीरूपगोस्वामिजी कृता)
(३) श्रीगौरगणोद्देशदीपिका (श्रीकविकर्णपूरजी कृता)
(४) श्रीव्रजविलासस्तवः (श्रीश्रीरघुनाथदासगोस्वामिजी कृत)
(५) श्रीसंकल्पकल्पद्रुमः (श्रीविश्वनाथ चक्रवर्तीजी कृत)
१४. श्रीमहामन्त्रव्याख्याष्टकम् (सचि
१५. ग्रन्थरत्नषट्कम् (सचित्र)
१६. श्रीगोवर्द्धनभट्टग्रन्थावली
१७. सहस्रनामत्रयम् अथवा ग्रन्थरत्ननवकम्
१८. श्रीनारायणभट्टचरितामृतम् (श्रीजानकीप्रसाद गोस्वामिकृत)
१९. उद्धवसन्देशः (श्रीमद्रूपगोस्वामिविरचितः) १
२०. हंसदूतम् (श्रीमद्रूपगोस्वामिविरचितः) २

श्री श्री राधारमणो जयति ।

ओं नमो भगवते श्रीगौरचन्द्राय

# हंस-दूतम्



दुकूलं बिभ्राणो दलितहरितालद्युतिभरं
जवापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः ।
तमालश्यामाङ्गो दरहसितलीलाञ्चितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ॥१॥

यः सर्व्वैरभिसंस्तुतोऽपि सततं यास्तौति यो योगिभि
र्ध्येयोऽन्तरनन्तभावचतुरा याः सन्ततं ध्यायति ।
वेदैर्मृग्यपथोऽपि यो मृगयते यासां रहः पद्धतिं
तं दुर्ज्ञेयमुपास्महे मुररिपुं धन्याश्च ता गोपिकाः ॥
अखण्डानन्दबोधाय सर्व्वस्मै सर्व्वहेतवे ।
मनो-वचन-दूराय कृष्णाय सततं नमः ॥

टीका—अथ मुरहरचरण-कमलयुगल-परिचरणविरहित–सकलासारसंसारवासनः श्रीवृन्दावनैकनिकेतनः परमभागवतः कविकुलधुरिणः श्रीरूपदेवोऽनवरतहरिचरितस्मरणेनैव सकलमपि याममयातयामं कर्त्तुं काव्योपदेशेनापि गोपीरमणचरणस्मरणमुपनयन्निजाभिमतदैवतं श्रीकृष्णरूपमङ्गलमाचरति । दुकूलमित्यादि मम हृदि कोऽपि तत्वेन नामजात्यादिविशेषेण निर्द्देशानर्हः पुरुषः स्फुरतु आविर्भवतु इत्याशंसा । एवंभूतस्यापि नराकृति-परब्रह्मत्वानुस्मरणाय विशेषणानि । स दुकूलं क्षौमं बिभ्राणो दधानः जात्या एकत्वं दुकूलं कीदृक् दलितेत्यादि दलितं यत्हरितालं धातुविशेषः तस्य द्युतिं कान्तिं हरति पचादिः, एतेन पीतत्वमुक्तं पुनः कीदृक् जवासंज्ञकानि पुष्पाणि श्रेणी पंक्तिः समूहमितियावत् तस्या रुचिः कान्तिस्तद्वत् रुचिरं पादाम्बुजयोस्तलमधोभागो यस्य सः । श्रेण्या रु-

चिरा वर्त्तमानत्वात् पुष्पाख्येत्राक्षिपति पञ्चमूलीमानयलिवत् तत्रैत्याद्यु-क्त्या पुष्पप्रतीतौ पुष्पपदमाद्रं तानुभवार्थं एतेन कान्तेरव्यतिचिक्कणता प्रतीयते उपरञ्जकमेतत् तथाचोक्तं धनुआदिषु शब्देषु शब्दाश्च धनु-रादयः आरूढत्वादि वा याति किञ्च "दत्त्वैकजवा-पुष्पे पञ्चवर्षफलं लभेत् । यत्रापराजिताबुष्पं जवापुष्पं तथैव च" इत्यागमशासनात् । वृ-क्षोऽपिजवापुष्पशब्दवृत्तिः प्रतीयते । अत्राप्ययं समासो वा तथा चामर-टीकायां रायमुकुटधृतत्रिकाण्डशेषः "ओड्रपुष्पोऽपि वृक्षोऽपि जवा-शब्दः प्रकीर्त्तितः" । तमालोऽसितबहुलश्यामच्छविवृक्षविशेषः तद्वत् श्यामम् अङ्गं यस्य स पुनः कीदृक् दरेति दरमीषद्धसितं तदेव लीला विला-सः, यद्वा दरहसिते ईषत् हसिते या लीला विभ्रमविशेषः तेन वा अञ्चितं पूजितं मुखं यस्य स च अत्र शोभाविशेष एव पूजा "हसितं तु वृथाहासो यौवनोद्भेदसम्भव" अकाण्डजत्वात् वृथात्वं हसितस्य साधा-रण्यं व्यावर्त्तयितुमाह—परेति परश्चासावानन्दश्चेति स तस्य आभोगः परिपूर्णता तत् स्वरूपः भावप्रधानोऽयाभोगशब्दो अविमृष्टबोधं जनयति सामानाधिकरण्यानुपपत्तेः एतेनानन्दस्वरूपत्वमुक्तं तथा च श्रुतिः "आ-नन्दो ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति" । परमानन्दस्य आभोगो यस्येतिपक्षस्तु परब्रह्मणि न लभते श्रुतिविरोधात् उपाधि—सम्बन्धस्या-विद्यमानत्वात् यतस्तत्र भेदः प्रतीयते । परमानन्दस्य आभोगो यस्मात् इति वा आभोगः शब्दः । ननु नन्दपुत्रत्वेन प्रतीतस्य कथं तथात्वमि-त्याशङ्कायामाह पुरुष इति परापि सन् पुरुषः तथा चोक्तं त्रिधाय शेते अन्तर्य्यामितया वसति पुरुषः तथा चोक्तं विधाय शेते यदमूष् पुरुष इति तस्मात् सर्व्वायाः नियत्वमुक्तं आविर्भावादिकन्तु मायाविलसित-मित्यर्थः । यद्वा ननु मनुष्यत्वेन प्रतीयमानस्य परिच्छिन्नस्य कुतः परा-नन्दाभोगत्वमित्याशङ्कायामाथाह पुरुष इति पुरुषु शरीरे शेते समीप-मात्मेत्यर्थः । उभयपक्षेऽपि निरुक्तं साधनं तथा च कोपीत्यनेनाश्चर्य-श्च । खण्डकाव्यत्वमुक्तं कश्चिदित्यादिभिः पदैरिति । तत्र संघात्वं

खण्डकाव्यं यदुक्तं—यत्रैकमर्थमेकेन सर्वेणैव तु वर्णयेत् । एकेन छन्दसा तत्तु सांघ्रताख्यमुदाहृतमिति वा एके मन्ये— तदुक्तं समानवृत्तिनिर्व्यूह—कौशिकीवृत्ति—समयबन्धापोज्झाति—घटित—पद्यैर्गीतं धीयते इति आशीरलङ्कारतः अभिलषितश्रीकृष्णमूर्त्तेर्वा संशनात् तथा च आशीर्नामाभिलषितवस्तु—ध्यानं यथा इति विभ्रमशीले श्यामः त्रिलोकाङ्गनार्थ एव क्रियाफलस्यानन्तत्वात् ओड्रपुष्पं जवेत्यमरः ओड्रपुष्पे जवाशब्दश्च प्रकीर्तित इति रायमुकुटधृत—त्रिकाण्डशेषः जवो वेगवति त्रिषु पुंलिंगस्तु भवेद्गे । ओड्रपुष्पे जवा स्मृतेति च वर्गतृतीयादौ मेदिनी । श्रेणी श्रीपुंसयोः पंक्तौ समान शिल्पि संहारीति च । तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे इति च । लीलां विदुः केलिविलासहासशृंगारभावप्रभवक्रियासु इति विश्वप्रकाशः । आभोगो वरुण—छत्रे पूर्णतायत्नयोरपीति विश्वप्रकाशः । शिखरिण्याछन्दस्तल्लक्षणं यथा रसैरुद्रैश्छिन्ना य म न स भ ला गः शिखरिणी ॥१॥

अनु०—जो उज्ज्वल-पीताम्बरधारण किए हुए हैं, जिनके-चरण-तल जपा-कुसुम के वर्ण समान लालिमामय-सुन्दर हैं और जिनका मुख-कमल मृदु-मन्द हास्यरेखा से शोभित है ऐसे परिपूर्ण परमानंद-घन मूर्त्ति, तमाल-श्यामल शरीर मेरे हृदय में प्रकाशित होवें ॥१॥

मुखोल्लास—दोहा

अखिल लोक आधार जो, पूरण परमानन्द ।
मम उर तिन श्री कृष्ण को, होहु प्रकाश अमन्द ॥१॥

मूल की भाषा पद्य ( सवैया मत्त गयन्द )

धारत पीतपटा छवि तासु दली हरिताल की कान्ति दुराई ।
पोति प्रसून जपा जनु सोहति जासु पदाम्बुज की अरुणाई ॥
श्याम तमाल सी अङ्ग लसै मुसकानि भरी मुख की जु लुनाई ।
सो परमानँद पूरण रूप प्रकाशहु मो उर अन्तर आई ॥१॥

सारंग—सोरठा

तनु तमाल सम श्याम, ता पर पीताम्बर रुचिर।
मन्द हँसनि अभिराम, दिव्य रूप यह उर बसै ॥१॥

◇○○◇

यदा यातो गोपीहृदयमदनो नन्दसदना-
न्मुकुन्दो गान्दिन्यास्तनयमनुविन्दन् मधुपुरीम् ।
तदामाङ्क्षीच्चिन्तासरिति घनघूर्णापरिचयै-
रगाधायां बाधामयपयसि राधा विरहिणी ॥२॥

टीका—इदानीमिष्टदेवतास्फूर्त्तिप्रार्थना-रूप-मंगलमाचर्य्य सकलरसेषु शृंगाररसस्य प्राधान्यात् तत्रापि विप्रलम्भस्य निरवधि हेतुमेव वर्णयन् प्रस्तावमवतारयति । यदेति ननु विषयसुखविमुखस्य पुण्यारण्यैकनिकेतनस्य किमनयानर्थं विवक्षया तथा चोक्तं संत्याजत् प्रमदागाथामित्यादि यतिधर्म्मे श्रीभागवते सत्यं अन्यविषयवर्णनमेव दोष एव श्रीकृष्णविषयककामवर्णनेन कामस्यैव फलं तथा च दशमे—न मय्यावेशितधियां कामः कामाय कल्पते । भर्जिता क्वथिता धानाः प्रायो बीजाय नेष्यते (१०—२२—२६) इति, प्रथमे मायां वर्णयतोऽमुष्य मायायां मुञ्चतीति "तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः (१-५-११) इति । अलं बहुना प्रकृतार्थो व्याख्यायते मुकुन्दः श्रीकृष्णो नन्दसदनान्नन्दस्य गृहात् मधुपुरीं मथुरां यातः गतस्तदा राधा चिन्तासरिति भावनारूपनद्यां अमाङ्क्षीत् मग्नाबभूव मम कष्टं एतादृश अनुपमलावण्यधाम भगवद्विरहे कथं जीविष्यामीति चिन्ता स कीदृक् गोपीहृदयमदनः गोपीनां हृदयं मनो मदयति हर्षयतीति तथा कर्त्तरि अनट् हृदयाल्हादकस्य विरहेऽत्यन्तचिन्ता हेतुर्भवत्येव, किं कुर्वन् गान्दिन्यास्तनयं अक्रूरं अनुविन्दन् लभमान सहायः सन्निति यावत् यद्यपि आ-

त्मना जायते धन्यो मध्यः पितृपितामहः । मातृपक्षेण मात्रा यः ख्याति-मेति नराधम इति मार्कण्डेयपुराणान्मातृकोक्तेनाधमत्वं प्रतीयते तथा-प्यति पुण्यशालित्वात् तन्नामोक्तं तथा गान्दिनी नाम काशीराजसुता सा च मातुरुदरे द्वादशवर्षाण्यवात्सीत् ततस्तत् पित्रोक्तं अम्ब किमिति न जायसे कथं मातरं क्लेशयसि अतो गर्भस्थयात्मजयोक्तं पितर्यदि प्रतिदिनं गामेकैकां विप्राय ददासि तदा वत्सरत्रयान्तेऽहं निःसरिष्यामि ततस्तत् पित्रा तथाकृते सेयं भवा स्वयमपि दिने दिने ब्राह्मणाय एकैकां गां ददातीति गान्दिनी नाम्ना बभूवेति विष्णुपुराणीया वार्त्ता । कथम्भू-तायां चिन्तासरिति घूर्णा आवर्त्तस्तस्य परिचया अत्यन्त संश्लेशयस्ते-रगाधायां अगम्यायां बहुवचनेन निरन्तर घूर्णा-सम्भवः उक्तः । चिन्तापक्षे बाधामयं पीडारूपं पयो यस्याः स्वार्थे मयट् । तत्र हेतुर्यतो विरहयुक्ता विरहः कान्तसंयोगाभावः अत्र समाप्तपुनरात्ततामेव दोषपरिहाराय हे-तुगर्भविशेषणतया व्याख्यायते । प्रोषितभर्त्तृकेयं यदुक्तं सा मनोभव दु-ष्मर्त्तासिवेद् प्रोषितभर्तृकेति । अन्यच्च देशान्तरगते पत्यौ सन्तापव्या-कुला प्रोषितभर्त्तृकेति ॥२॥

अनु०—जब गोपीजन-हृदयानन्दन-श्रीकृष्णचन्द्र ने अक्रूर के अनु-रोध से उनके साथ श्रीनन्द-भवन से मथुरा को गमन किया तब विरहिणी श्रीराधिका उनके-विरह में व्याकुल होकर निविड-आव-र्त्तमय अगाध पीडापूर्ण, चिन्ता-नदी में मग्न हो गई ॥२॥

सुखोल्लास

गये संग अक्रूर के, मथुरा कृष्ण मुरारि।
दुखित भये ता विरह में, ब्रजवासी नर नारि ॥२॥

मूल की भाषा पद्य—छन्द रोवै

गोपीजन मन मदन प्रकाशक भक्तन शुभ गाल कारी।
सँग अक्रूर नन्द घर तें मथुरा कौं गये मुरारी ॥

तब ही नें विपत्ति जल पूरी चिन्ता सरित अगाधा।
भ्रम बहु भँवर परैं तहँ बूड़ी कृष्ण विरह दुख राधा॥२॥

सारांश—सोरठा

विरह विपति जल धार, चिन्ता सरिता रूप जनु।
बहु भ्रम भँवर अपार, तामें बूड़ी राधिका॥२॥

००००

**कदाचित्खेदाग्निं विघटयितुमन्तर्गतमसौ**
**सहालीभिर्लेभे तरलितमना यामुनतटीम्।**
**चिरादस्याश्चित्तं परिचितकुटीरावकलना-**
**दवस्था तस्तार स्फुटमथ सुषुप्तेः प्रियसखी॥३॥**

टीका—अथ निरन्तर-विरह-दहन-परितापिताया राधाया विरहतापोपनोदनाय यमुनातटगताया विरहोद्दीपनं वर्णयन् प्रस्तावमाविष्करोति। कदाचिदित्यादि-असौ राधा कदाचित् अन्तर्गतं खेदाग्निं विघटयितुं आलीभिः सखिभिः सह यामुनतटीं यमुनातीरं लेभे प्राप्तवतीत्यन्वयः। ननु विरहे रम्यस्थानादेरुद्वेगजनकत्वात् कथं तत्रान्तर्गतखेदाग्निः खंडनं भवतु यत उक्तं हसितानि सुगन्धानि सरांसि च वनानि च। सम्भोगाभिमुखं कुर्युरुद्वेगं विरहे भृशमिति अत आह तरलितमनाः चञ्चलचेता अतएव विरहतापोपशमः स्यादिति चिन्तावती किञ्च तरलितं चापाद्यानादेश्चाञ्चल्यभावश्च सूचितः तथा चोक्तं भूयिष्ठं दह्यमानोऽसौ शीतलं वस्तु सेवते। गात्रं विरहसन्तापाद् यत्र कुत्र विमुञ्चतीति विरहोद्दीपनहेतुमाह चिरादिति। अस्या राधायाश्चित्तं कर्म चिरात् चिरकालं व्याप्य परिचितं परिशीलितं यत् कुटीरं अर्थाल्लतागृहं तस्यावलोकनात् दर्शनात् अवस्था दशा स्फुटं व्यक्तं यथास्यात्तथा तस्तार व्याप्तवती प्राक् गुरुजनलज्जया तिरोहितासीदिदानीं निर्लज्जतया व्यक्ता बभूवेति स्फुटशब्दार्थः अवस्था कीदृशी सुषुप्तेः प्रियसखी सुषुप्तिर्नामऽर्द्रिक्ताया-

बुद्धे रवस्थाविशेषः तथा चैकादशे-जाग्रत् स्वप्न सुषुप्तञ्च गुणतो बुद्धि-वृत्तय इति(११-३-२७) सत्त्वाज्जागरणं विद्यात् रजसा स्वप्नमादिशेत् । प्रस्वापं तमसा जन्तोरिति च(११-२५-२०)प्रस्वापं सुषुप्तिं सा च मूर्च्छा-सदृशी जातेति ध्वनितं स्फुटे व्यक्ते प्रफुल्ले च व्याप्ते च कलितेऽन्यवद्-निचिश्व: ।।३।।

अनु०—किसी दिन श्रीराधिका विरह से व्याकुल एवं अधीर मन होकर अपनी मर्म-भेदी विरह-व्यथा को दूर करने के लिए अपनी प्यारी सखियों के साथ श्रीयमुना-पुलिन पर जा पहुँची । जो निकुञ्ज-भवन-चिर-परिचित अपना विहार-स्थल था उसके दर्शन मात्रसे उनके हृदय में श्रीकृष्णचन्द्र की मधुर-स्मृति उद्दीपित हो उठी और उनको प्रिय सुषुप्ति की मोहमयी दशाने प्यारी सखी की भांति आच्छादित कर लिया अर्थात् श्रीराधा मूर्च्छिता होगईं ।।३।।

सुखोल्लास—दोहा

सुखप्रद होत पदार्थ जे, प्रिय-संयोग मझार ।
जाने जात वियोग में, ते दुख के आगार ।।३।।

मूल की भाषा पद्य-छन्द गीतिका

यह खेद अपनी घटन कों चञ्चल मना राधा चली ।
गइ तीर यमुना के सखिन सँग विरह विपदा में रली ।।
देखी लता कुञ्जैं तहाँ परिचित अनेकै दिनन की ।
लखि तिनहिं मूर्छित भई सो सुधि बुधि गँवाई स्व तन की।।३।।

सारांस—सोरठा

राधा यमुना तीर, विरह ज्वाल के घटन हित ।
गयी सु भई अधीर, परिचित कुञ्जन को निरखि ।।३।।

००००

**तदा निष्पन्दाङ्गी कलितनलिनीपल्लवकुलैः**
**परीणाहात्प्रेम्णामकुशलशताशंकिहृदयैः ।**

दृगम्भोगम्भीरीकृतमिहिरपुत्रीलहरिभिः
विलीना धूलीनामुपरि परिवव्रे परिजनैः ॥४॥

टीका—तथा चातिसम्भ्रमेण सखीनां व्याकुलितत्वं वर्णयति । तथा तेन प्रकारेण मूर्च्छयेति यावत् निष्पन्दाङ्गी सा परिजनैः सखीभिः परिवव्रे वेष्टिता इत्यन्वयः । कीदृशैः कलितनलिनी-पल्लवकुलैः कलितं धृतं नलिन्याः पल्लवकुलं दलसमूहो यै पुनः कीदृशैः अकुशल—शताशङ्किहृदयैः अकुशलशतं मरणादिः तदाशंकनशीलं हृदयं मनो येषां तत्र हेतुः प्रेम्णां परिणाहादिति । प्रेम्णां विशालताहेतोः अतिप्रियवस्तुनो प्रायमेवाशङ्केव इति लौकिकीरितिः पुनः कीदृशैः दृगित्यादि दृशामम्भोभिर्नेत्रजलै र्गम्भीरीकृता मिहिरपुत्र्या लहरी तरङ्गो यैः । सा कीदृशी धूलीनामुपरि विलीना विरोपिता पतितेत्यर्थः । कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीवमिति,परीणाहो विशालतेत्यमर उपसर्गस्य घन्य-मनुष्ये वहुलमितिदीर्घः, मिहिरारुण पूषण इति च ॥४॥

अनु०—उस मूर्च्छित दशा में स्पंदन शून्य (जड़वत्) पुलिन-शय्या पर पड़ी हुई श्रीराधाजी को सखियाँ चारों ओर से घेर कर पद्म पत्रों से बीजन करने लगीं तथा प्रेमाधिक्य से उनका हृदय शतशत अमंगलों की आशंका करने लगा कि, हाय, न जाने हमारी प्रिय सखी राधिका-अब जीवित रह सकेगी या नहीं ? उनके मन में इस तरह की आशंका होने लगी और उन सबका नयनजल यमुना में गिर-गिर कर नदी की तरंगों को द्विगुणित करने लगा अर्थात् व अधिकाधिक रोदन करने लगीं ॥४॥

मुखोल्लास—दोहा

राधा के तन की दशा, मौन मलिन हत चेत ।
निरखि सखी सोचत जतन, पै न दिखाई देत ॥४॥

मूल की भाषा पद्य-छन्द रूप घनाक्षरी

विरह व्यथा तें जाके थकित भये हैं अङ्ग,
लोटी रज माहिं चारों ओर आलिन की भीर।
पवन डुलायवे के हेतु हाथन में जिन,
सुन्दर कमलिनी के पात हू गहे स नीर॥
अति ही विशाल प्रेम कारन सों सोचें,
सब सैकरन शङ्का अकुशल की करें अधीर।
बाढ़ी मन भ्रमना जो थमना सकति नेंक,
आँसुन सों जमना की धारहू करी गँभीर॥४॥

सारांश—सोरठा

सखिजन प्रेमासक्त करत कमल दल बीजना।
भई हताशा व्यक्त राधा जीवन में जिन्हें॥४॥

○○○○

ततस्तां न्यस्ताङ्गीमुरसि ललितायाः कमलिनी-
पलाशैः कालिन्दीसलिलशिशिरै वींजिततनुम्।
परावृत्तश्वासाङ्कुरचलितकण्ठीं कलयतां
सखीसन्दोहानां प्रमदभरशाली ध्वनिरभूत्॥५॥

टीका—ईषदाश्वस्तां वीक्ष्य तत् सखीनां हर्षचेष्टितमाह तत इत्यादि ततः कमलदलवीजनानन्तरं तां राधां कलयतां पश्यतां सखीसन्दोहानां सखीसमूहानां प्रमदभरशाली हर्ष-निवहयुक्तो ध्वनिरभूत् जय जय मंगलमित्यादि शब्दोऽभवत् कीदृशीं ललितानाम्नी प्रियसहचरी तस्या उरसि न्यस्ताङ्गीं निक्षिप्तदेहां कमलिनीपलाशैः पद्मपत्रैर्वीजिततनुं वीजिता तनु र्यस्याः नित्यापेक्षत्वात् सापेक्षेणापि समासः कीदृशैः कालिन्दी यमुना तस्याः सलिलेन शिशिरैः शीतलैः तां कीदृशीं परावृत्तः प्रतिनिवृत्तः बहिः स्फुटो यः श्वासांकुरः प्राणवायुस्तेन चलितः ईषत् स्फुरितः कण्ठे

यस्या अंकुरपदं ईशत्वस्य सूचनार्थं पत्रं पलाशं छदनमित्यमरः । समूह-निवह-व्यूह-सन्दोह-विसर-व्रज इति । भवः पूर्वो द्रवो पुंसि भवोऽविशय-भावकाविति मेदिनी । शिशिरः स्याद्द्रवो भेदे तुषारशीतलोऽन्यवदितिविश्वः॥

अनु०—उस समय ललिता-सखी के वक्षस्थल पर विराजमान श्रीराधिका को सखीगण यमुना के शीतलजल से सिक्त-पद्म पत्रों द्वारा बार बार वीजन करने लगीं जिससे श्रीराधा का कण्ठ-प्रदेश निश्वास वायु द्वारा मन्द मन्द कम्पित प्रतीत होने लगा, यह देख कर सब सखियाँ आनन्द कोलाहल करने लगीं ॥५॥

मुखोल्लास—दोहा

करत करत उपचार बहु, लाग्यौ कछुक विलम्ब ।
निश्चय राधा कौ भयौ, तब जीवन अवलम्ब ॥५॥

मूल की भाषा पद्य—छप्पय

ललिता के उर परयौ अङ्ग राधा कौ ता छन ।
शीतल नलिनी पत्र भये लहि जमना जल कन ॥
तिन के व्यजन बनाय डुलायौ पवन सहेली ।
चगद्यौ कंठहि श्वास मुदित लखि भईं नवेली ॥
मिलि यूथ परस्पर सुन्दरी, मङ्गल सानी मुदित मन ।
चैतन्य भई सखि राधिका, इहि विधि लगीं ध्वनि करन॥५॥

सारांश—सोरठा

कलित कलेवर बास, पायौ सुरभि समीर नें ।
कंठ डह डहे श्वास, निरखि भईं प्रफुलित अली ॥५॥

००००

निधयाङ्के पङ्केरुहदलनिटङ्कस्य ललिता
ततो राधानीराहरणसरणौ न्यस्तचरणा ।

मिलन्तं कालिन्दीपुलिनभुवि खेलाञ्चितगतिं
दद्र्शाग्रे कञ्चिन्मधुरविरुतं श्वेतगरुतम् ॥६॥

टीका—अथ हंसस्य दर्शनप्रसङ्गमाह निधायेत्यादि ततोऽनन्तरं ललिता पङ्केरुहदलविरङ्कस्य पद्मपत्रमयशय्यायाः अङ्के मध्ये राधां निधाय स्थापयित्वा नीराहरणशरणौ जलानयनमार्गे न्यस्तचरणा दत्तपदा सती अग्रे परितः कालिन्दीपुलिनभूवि यमुनातटभूमौ मिलन्तं चरन्तं किञ्चित् श्वेतगरुतं राजहंसं ददर्श दृष्टवतीत्यन्वयः। कीदृशं खेलाञ्चितगतिं खेलया विभ्रमविशेषेण अञ्चिता पूजिता गतिर्यस्य तं। पुनः कीदृशं मधुरविरुतं मधुरशब्दकरं अनेन दूतयोग्यतोक्ता विटङ्कशब्दोऽत्र शय्यायां औचित्याद्बोध्यः। तथाचोक्तं अर्थात् प्रकरणाल्लिङ्गादौचित्याद् शकालतः। शब्दार्थास्तु विभिद्यन्ते न रूपादेव केवलमिति ॥६॥

अनु०—उसके अनन्तर श्रीराधा को पद्म-पत्र-मयी कोमल- शैय्या पर विराजमान कराकर जल लाने के लिए-ज्योंही श्रीललिता ने जमुना की सीढ़ियों-पर पैर रक्खा त्योंही देखा कि,सामने यमुनातट पर से कोई-एक मधुर शब्द करने वाला शुभ्र-हंस विलास-गति से उसकी ओर आगमन कर रहा है ॥६॥

सुखोल्लास—दोहा

ललिता राधा की दशा, कहन कृष्ण ढिग जाय।
दूत खोजन को चली, ता छन अवसर पाय ॥६॥

मूल की भाषा पद्य—छंद रोवें

कमल दलन की शय्या रचि कें राधा तहाँ सुवाई।
धरे चरण जमना जल मग पुनि दूतहिं खोजन आई॥
ललिता यमुना पुलिन माहिं इक देख्यो हंस अगारी।
मधुर बोल क्रीड़ा युत ताकी मन्द चाल अति प्यारी ॥६॥

सारांश-सोरठा

कालिन्दी के कूल, ललिता लख्यौ मराल इक।
सबै भाँति अनुकूल, मन्द चलत बोलत मधुर ॥६॥

००००

तदालोकस्तोकोच्छ्वसितहृदया सादरमसौ
प्रणामं शंसन्ती लघु लघु समासाद्य सविधम्।
धृतोत्कण्ठा सद्यो हरिसदसि सन्देशहरणे
वरं दूतं मेने तमतिललितं हन्त ललिता ॥७॥

टीका—श्रीराधाया विरहावस्थां हरिचरणे विज्ञापयितुं मनसो ललिताया औत्सुक्यमतिशयेन विशेषावधारणरहितायाश्चेष्टितमाह तदेत्यादि। असौ ललिता तं हंसं वरं श्रेष्ठं दूतं मेने हन्त हर्षे अकस्मात् दूतप्राप्त्या हर्षः यद्वा विषादे हन्त शब्दः विषादस्तु कविगत एव हा इदृक् वैकल्यं तस्या यत्तत् कर्म्म योग्यमपि पक्षिणं दूतं मेने। सा कीदृशी तदालोकेन हंसस्य दर्शनेन स्तोकमीषत् उच्छ्वसितं आश्वस्तं हृदयं मनो यस्या अमुना अस्या ईदृग्वैधुर्य्ये निवेदिते कृष्ण आगमिष्यतीत्याश्वासः। किं-कुर्व्वती लघुलघु अतिशीघ्रं यथास्यात् यद्वा पलायनभिया मन्दं मन्दं यथा स्यात्तथा सविधं हंसस्य समीपं समासाद्य गत्वा प्रणामं शंसन्ती कथयन्ती। कीदृशी सद्यस्तत्क्षणं हरिसदसि सन्देशहरणे कृष्णसभायां वार्त्ताप्रापणार्थं धृतोत्कण्ठायुक्तत्वात् योग्यायोग्यविचारोऽपि न कृत इति भावः। तं कीदृशं अतिललितं अतिसुन्दरं लघुरगुरौ गन्धे निःसारे वा-च्यवत् क्लीवं। शीघ्रं कृष्णागुरुणि च पुष्कलाख्यौषधौ स्त्रीति मेदिनी। समीपे निकटासन्न सन्निकृष्ट सनीडवत्। सदेशाभ्यास सविध-समर्य्याद-सवेशवदित्यमरः॥ ललितं हारभेदे स्यादीप्सितेऽपि चेति विश्वः, लघु लघ्विति गुण सादृश्ये समासवच्चेति द्वित्वं। समासवत्ता च हन्त हर्षे विषादे च इत्यमरः॥७॥

अनु०—श्रीललिता ने उस मनोहर-पक्षी को देखकर कुछ प्रफुल्ल-चित्त से उत्कण्ठा सहित उसको सादर प्रणाम किया एवं धीरे-धीरे उसके निकट पहुँचकर अपने मन में उसी को मथुरा पुरी में श्री कृष्णचन्द्र की सभा में अपना सन्देश देकर भेजने के योग्य, दूत-कार्य-कुशल अपना सन्देश-वाहक, योग्य-पात्र समझा ॥७॥

मुखोल्लास—दोहा

प्राण गगन संशय तथा, बाधा राधा देह।
सबै कहैगौ कृष्ण सौं, यह सुचि सरल सनेह ॥७॥

मूल की भाषा पद्य-छन्द मत्तगयन्द

देखत हर्ष भयौ ललिता अति मन्द चली सिर कंठ पै आई।
सादर ताहि प्रणाम कियौ मन जासु यहै इक चाह समाई॥
लै यह जाय तुरन्त सँदेश सभा हरि माझ सुनावहि धाई।
आनँद ह्वैके बस सुन्दर हंसहि दूत कियौ यह रीति उपाई॥७॥

सारांश—सोरठा

मान्यौं दूत मराल, ललिता चित्त प्रसन्न ह्वै।
यह सँदेश तत्काल, जाय कहैगौ कृष्ण सौं ॥७॥

००००

**अमर्षात् प्रेमेर्ष्यां सपदि दधती कंसमथने**
**प्रवृत्ता हंसाय स्वमभिलषितं शंसितुमसौ।**
**न तस्या दोषोऽयं यदिह विहगं प्रार्थितवती**
**न कस्मिन् विश्रम्भं दिशति हरिभक्तिप्रणयिता ॥८॥**

टीका—अमर्षादित्यादि असौ ललिता अमर्षात् कोपात् अमर्षमाश्रित्येति ल्यबलोपेऽत्र पञ्चमी हंसाय स्वयं स्वकीयमभिलसितं शंसितुं कथयितुं प्रवृत्ता प्रवर्त्तमाना अभूदिति यावत्। अमर्षहेतुगर्भविशेषणमाह सपदि तत्क्षणं कंसमथने श्रीकृष्णे प्रेमेर्ष्यां प्रणयकोपं दधति धारी-

प्रक्रम एव । अस्मान् त्यक्त्वा निर्द्दयोऽसौ तत्र पुरस्त्रीविलासविवशस्तिष्ठतीति स्मरणं कोपहेतुः । यद्वा उद्धववत् श्रीकृष्णप्रेरितं दूतं मत्वा प्रथमं प्रणयकोपः पश्चात्तस्य प्रार्थना सन्देश-वचनाभावादभिलसितदूतं सम्भावयति । ननु विशेषज्ञानहीनं पक्षिणं कथं दूतं कृतवतीत्याह इह दौत्यकरणे यद्विहङ्गं प्रार्थितवती तस्यायं सारासारविचाररहितत्वात् दोषो न । तत्र हेतुः हरिभक्तिप्रणयिता श्रीकृष्णचरणावधानाति-हार्दता कस्मिन् जने विश्रम्भं विश्वासं न दिशति । हरिभक्तिरसिकस्य सर्व्वत्रेश्वरदृष्ट्या उच्चनीचभेदाभावात । यद्वा विश्रम्भं प्रणयं हरिभक्तस्य सर्व्वत्र प्रणयात् विश्रम्भः केलिकलहविश्वासे प्रणये चेति मेदिनी । हंसायेति गत्यर्थस्य धात्वर्थ इति सम्प्रदाने चतुर्थी ।।८।।

अनु०—श्रीकृष्ण विरह में उनके निष्ठुर-व्यवहार जनित असहिष्णुता से तत्क्षण श्रीकृष्ण के प्रति ललिता का प्रेमज-द्वेष का भाव उदय हो उठा और वह हंस के प्रति अपनी अभिलाषा कहने को प्रवृत्त हुई । अपना सन्देश ले जाने को वह हंस से प्रार्थना करती है, यह उसका कोई अविवेक या दोष नहीं समझना चाहिये क्यों कि, श्रीकृष्ण-प्रेम की आविष्यता जगत में किसके प्रति विश्वास नहीं उत्पन्न करा देती अर्थात् सभी के प्रति विश्वास पैदा कर देती है ।।८।।

मुखोल्लास–दोहा

अन्तर प्रीति पुनीत हरि, प्रकट कठोर अलाप ।
ललिता कहत मराल सों, राधा कौ सन्ताप ।।८।।

मूल की भाषा पद्य–छन्द रोवै

तुरत क्रोध सों प्रेम ईरषा कृष्ण चन्द्र में धारी ।
करी हंस सौं विनय राधिका विरह निवारन हारी ।।
ललिता कौ नहिं दोष विहँग सों करी प्रार्थना यामें ।
राखत हैं विश्वास आपनौ हरि के भक्त न कामें ।।८।।

सारांश–सोरठा

ह्वै कर ललिता दीन, खग सों कीन्हीं प्रार्थना।
प्रेम भक्ति रस लीन, जानत हैं हरि विश्व मय ॥८॥

००००

**पवित्रेषु प्रायो विरचयसि तोयेषु वसतिं**
**प्रमोदं नालीके वहसि विशदात्मा स्वयमसि।**
**अतोऽहं दुःखार्त्ता शरणमबला त्वां गतवती**
**न याञ्चा सत्पक्षे व्रजति हि कदाचिद्विफलताम्॥९॥**

टीका—प्रथमं तावत् प्रवर्त्तयितुं तं स्तौति पवित्रेष्वित्यादि। प्रायः पवित्रेषु तोयेषु वसतिं निवासं करोसि एतेन स्थानपवित्रात् संसर्गदोषाभाव उक्तः। अलीकेऽपि प्रमोदं हर्षं न वहसि न धारयसि एतेन पर प्रेयः करणासक्तात् तच्च मित्रोक्ता अथच नालीके पद्मखण्डे प्रमोदं हर्षं वहसि एतेनापि आहारदोषः परिहृतः स्वयं स्वभावादेव विशदात्मा निर्म्मलान्तःकरणोऽसि एतेन कौटिल्याभाव उक्तः शुभ्रशरीरः यस्मादेतादृशगुणविशिष्टोऽसि। अतः कारणात् अबला त्वहं त्वां शरणं गतवती अबलेत्यनेन स्वयं गमनाशक्तिरुक्ता कीदृशी दुःखार्त्ता एतेनात्मजनोपकारकरणेन पुण्यबाहुल्यं दर्शितं भविष्यतीति ध्वनितं। निवारणाशङ्कामर्थान्तरन्यासेन वारयति हि यस्मात् सत् पक्षे सज्जनविषये याच्ञा प्रार्थना विफलतां व्यर्थत्वं कदाचिन्न व्रजति सफलेव भवतीत्यर्थः। अथ च सन्तो मनोहराः पक्षा यस्य स तस्मिन् त्वयीत्यर्थः। पवित्रं वर्षणे कुशे पवित्रं ताम्रपयसोः,शुद्धे चापि तदन्यवदिति विश्वः। अलीकं त्वप्रियेऽनृतेइत्यमरः। नालीकं शरशल्यावेऽब्जस्य वज्रखण्डे नपुंसकमिति मेदिनी। पक्षेमासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादे परतो वृन्दे वने सखिसहार्थयोः। पतत्रे चुल्लिरन्ध्रे च देहांशे वात कुञ्जरे इतिविश्वः। शरणं गृहरक्षित्रो वध-धवक्षणयोरपीतिमेदिनी। विशदः पाण्डरे व्यक्ते

।

इति च, विशदस्तालव्य मध्य शद्लृशातने इत्यस्मात् रायमुकुटेन साधितत्वात् ॥९॥

अनु०–हे हंस! तुम बहुधा पवित्र-जल में निवास करते हो एवं मृणाल का भोजन कर आनन्दानुभव करते हो अतः विशेष कर तुम स्वयं भी पवित्रात्मा हो। तुम्हारा शुभ्र शरीर देखकर अनुमान होता है कि, उसी के अनुरूप तुम्हारा चित्त भी शुद्ध होगा। इसी कारण से मैं-दुःख पीडित असहाय अबला तुम्हारी शरण-ग्रहण करती हूँ मैं जानती हूँ कि, साधु पुरुषों से की हुई कोई भी प्रार्थना विफल नहीं होती ॥९॥

सुखोल्लास–दोहा

कहत हंस सों मधुर स्वर, सविनय करुणा ऐन।
दूत बनन उत्साह हित, ललिता मीठे बैन ॥९॥

मूल की भाषा पद्य–छन्द गीतिका

हे हंस खग अवतंस तुम बहु शुद्ध जल में बसत हौ।
आनन्द मानत पद्म तें शुचि प्रकृति निर्मल लसत हौ॥
मैं व्यथित अबला शरण आई ये सुलक्षण पाय के।
नहिं होत निष्फल याचना ध्रुव, सज्जनन पै जाय के ॥९॥

सारांश–सोरठा

शुक्ल वर्ण अभिराम, बाहर भीतर प्रकृति शुचि।
पूरै जन मन काम, भव्य मिलन, कोविद कहत ॥९॥

००००

चिरं विस्मृत्यास्मान् विरहदहनज्वालविकलाः
कलावान् सानन्दं वसति मथुरायां मधुरिपुः।
तदेतं सन्देशं स्वमनसि समाधाय निखिलं
भवान् क्षिप्रं तस्य श्रवणपदवीं सङ्गमयतु ॥१०॥

टीका—प्रस्तुतं ज्ञापयति चिरमिति । मधुरिपुः श्रीकृष्णः अस्मान् विस्मृत्य मथुरायां सानन्दं यथाभवति चिरं चिरकालं व्याप्य वसति अस्मान् कीदृशी विरहदहनज्वालविकलाः विरह एव दहनोऽग्निः तस्य ज्वालैः शिखाभिः विकलाः विधुराः अनेन निरन्तर-स्मरजर्ज्जरितानां धाष्टर्यं न दोषावहमितिसूचितम् । ननु सततान्हितपरस्त्रणपरस्य विलम्बे कोऽयमुद्वेग इत्यत आह-सानन्दमिति ननु दुर्व्वाररिपुनाशोऽप्यानन्दावह एव तथा नेत्याह कलावानत्र नहायुक्तः अथच कलाश्चतुषष्ठिस्तद्युक्तम् । अतएव तथाविध वैदग्धी-निपुणनायकस्य विरहोऽतिदुःसह इतिभावः । तत्र किं विधेयमित्याह तत्तस्मात् वक्ष्यमाण-सन्देशं वाचिकं निखिलं समग्रं स्वमनसि समारोप्याधाय भवान् तस्य श्रवणपदवीं क्षिप्रं सङ्गमयतु प्रापयतु इति प्रार्थना । वह्नेर्द्वयोर्ज्वालकीलावर्च्चिहेति शिखा स्त्रियामित्यमरः । कला स्यान्मूलके वृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कला नाकालमानयोरितिविश्वः ॥१०॥

अनु०—वह कलावान्-कपटी कृष्ण विरह-ताप-संतप्त हम सबको विस्मरण कर बहुत दिन से मथुरा में निवास करते हैं । तुम हमारे सकल-सन्देश को अपने हृदय में धारण करके अर्थात् हम जो जो कहती हैं उसे मनमें रख के शीघ्र ही श्रीकृष्ण के कर्णगोचर करो तात्पर्य यही है कि,पहले हमारी-विरह-वार्ता शीघ्र पहोंचाओ ताकि श्रीकृष्ण के साथ हमारा मिलन होवै ॥१०॥

मुखोल्लास—दोहा

हंस जाउ तुम मधुपुरी, जहां विराजत कृष्ण ।
सरस दरस हित गोपिका, राधा सहित स तृष्ण ॥१०॥

मूल की भाषा पद्य-छन्द गीतिका

चिर काल तें व्याकुल भयीं बहु विरह ज्वाला तें जरी ।
करि त्याग हम कों हंस ! सुख सों बसत मधु रिपु मधुपुरी॥

सन्देश सब निज चित्त धरि कें बेगि मथुरा जाइये।
बर कलाधारी ब्रज बिहारी कों तुरन्त सुनाइये ॥१०॥

सारांस—सोरठा

हम सों नेह बढ़ाय, आप बसे हरि मधुपुरी।
कहौ हंस यह जाय, विरह ज्वाल गोपी जरत ॥१०॥

००००

**निरस्तप्रत्यूहं भवतु भवतो वर्त्मनि शिवं**
**समुत्तिष्ठ क्षिप्रं मनसि मुदमाधाय सदयम्।**
**अधस्ताद्धावन्तो लघु लघु समुत्तानलयनै**
**र्भवन्तं वीक्षन्तां कुतुकतरलाः गोपशिशवः ॥११॥**

टीका—आशिषा सम्बद्धयन्ती तं प्रोत्साहयति निरस्तेति। भवतो वर्त्मनि पथि निरस्तः प्रतिक्षिप्तः प्रत्यूहः विघ्नो यत्र तद्यथा भवति तथाशिवं कल्याणं भवतु आशिषिलोट् मुदं हर्षं आधाय अर्पयित्वा सदयं यथाभवति समुत्तिष्ठ उद्धटनं कुरु अतो नात्रात्मनेपदं प्रेरणे लोट् प्रभुत्व-निराकरणाय सदयमिति अस्मासु दयां कृत्वा एवं कुरु नतु प्रभुत्वं करोसीत्यर्थं। परोपकारात् हर्षः। यद्वा अतिदुर्ल्लभमधुपुरीगमन-श्रीकृष्णाद्-र्शनाभ्यां हर्षः। यद्वा कौतुकहेतुमाह लघु लघु अतिशीघ्रं यथास्यात्तथा अधस्तादुधावन्तो गोपशिशवः समुत्तानलयनैः उद्ध्क्षिप्तनेत्रै भवन्तं वीक्षन्तां पश्यन्तु आशंसा कीदृशाः कुतुकेन कुतूहलेन चञ्चलाः भवति उपरि निरीक्ष्य अहं-महमिकया धावतो बालान् दृष्ट्वा तवापि हर्षं स्यादितिभावः। तरलं चञ्चले शिडगे भास्वरेऽपि त्रिलिङ्गकं। हार-मध्यमानापुंसि यवागू सुरयो स्त्रियामिति मेदिनी। कौतूहलं कुतुकञ्च कुतूहलमित्यमरः ॥११॥

अनु०—हे हंस! तुम्हारा गमन-मार्ग विघ्न रहित एवं मंगलमय हो। तुम कृपा करके सानन्द चित्त से शीघ्र यात्रा करो। ऊँचा उड़ता

आ तुमको सकल व्रज-वासी गोप-बालक गण कौतूहल पूर्ण हृदय
। अपनी ऊँची दृष्टि करके देखें ।।११।।

मुखोल्लास-दोहा

रुचि उपजावन हंस की, ललिता यात्रा माहिँ ।
कहत सुगमता मार्ग की, अरु कौतुक दरसाहिँ ।।११।।

मूल की भाषा पद्य-छन्द गीतिका

निर्विघ्न मंगल होहु तुम जिहि भाँति जा मारग चलौ ।
निज हृदय दया विचारि सत्वर उठहु आनँद में रलौ ।।
नीचे तुम्हारे गोप बालक खेल में चञ्चल घने ।
करि कछुक ऊँचे नयन देखहिँ भजहिँ परम सुहावने ।।११।।

सारांश-सोरठा

होहि तुमहिँ निर्दोष, मङ्गल कारी मार्ग यह ।
ग्वाल बाल परितोष, लहैं तुम्हारे दरस सों ।।११।।

◇◇◇◇

स वैदग्धीसिन्धुः कठिनमतिना दानपतिना
यया निन्ये तूर्णं पशुपयुवतीजीवन-पतिः ।
तया गन्तव्या ते निखिलजगदेकप्रथितया
पदव्या भव्यानां तिलक किल दाशार्हनगरी ।।१२।।

टीका—पन्थानमुपदिशति स इति दानपतिना अक्रूरेण यया पदव्या स
श्रीकृष्णस्तूर्णं निन्ये भव्यानां तिलक उत्तमाशयानां श्रेष्ठतया दाशार्हन-
गरी दाशार्हवंशोद्भवानां नगरी मथुरा ते गन्तव्या कर्त्तृ : कृत्यैश्चेति
कर्त्तरि षष्ठी यद्वा ते तया इत्यर्थाव्ययस्ते शब्दः किल निश्चये । कदाचि-
दस्मान् संस्मृत्य श्रीकृष्णो यया याति तदज्ञातायां तस्य पदव्यां तद्दर्शनं
स्यादिति तद्दर्शने गमनेऽभिप्रायः यद्वा अस्मद्वारयाभियातिन्नजुना तेन
कर्मना श्रीकृष्णमादायाक्रूरेण तूर्णं गतम्, अतो भवताऽपि तया झटिति

गन्तव्यमितिभाव: । ननु मया उपदेशकं विना कथं ज्ञातव्यमिति चेत्तत्राह निखिलजगदेकप्रथितया इति समग्रजगति एका मुख्या प्रथिता ख्याता तया एतेन जगद्विख्यातत्वान्न तत्रोपदेश-कालापेक्षा इति भाव: । स कीदृक् वैदग्धी विदग्धता मित्रादेर्वाञ्छितामिति न स्त्रियां सुक् तस्याः सिन्धुरिव धिन्दुः अपरिमितविदग्धीयुक्तत्वात् । कीदृशेन अक्रूरेण कठिनमतिना अतिनिर्दयचित्तेन अत्र हेतुः स कीदृक् पशुपयुवतिजीवनपतिरिति पशुपयुवतीनां गोपस्त्रीणां जीवनस्य पालकः तेन विना जीवनस्यानवस्थानात् यः किल जीवनस्य पालकं हरति स कठिनमतिरेव तत्रापि सकलजनकरुणाविषयानां स्त्रीणां जीवनपति-हारकोऽपि कठिन: सुतरामेव तथाचोक्तं तृतीये व्याधस्याप्यनुकम्प्यानां स्त्रीणामित्यादि । अथ च अदानपतिना इत्यकारप्रश्लेष: अविद्यमानं दानं धनादिवितरणं येषां तेऽदाना अतिकृपणाः तेषां पतिः श्रेष्ठस्तेन यः खलु परजीवनमपि न त्यजति स कृपणश्रेष्ठ एव यद्वा दानं खण्डनं तस्य पतिः तदधिकारी तेन दोऽवखण्डने धातुः श्रीकृष्णानयनेनास्माकं जीवनमवखण्डितवानित्यर्थः । तिलकं चित्रके प्राहुर्नानामे तिलकालके, वेणुस्तु द्रुमभेदेषु क्लोम्नि गोरोचनापि चेतिविश्वः । नानार्मं रत्नं अध्वलः श्रेष्ठेऽपि तिलकशब्दः तिलको मानचित्रे स्यात् प्रमाणे तिलको मतः इत्यनेकार्थध्वनिमञ्जरी ॥१२॥

अनु०—श्रीललिता अब मार्ग निर्देश करती हैं—हे साधु-श्रेष्ठ हंस ! निष्ठुर-हृदय अक्रूर जिस मार्ग से होकर किशोर-मुकट-मणि, गोपी गण-जीवन-रक्षक श्रीकृष्णचन्द्र को लेकर गया है तुम सकल-लोक-विख्यात उसी मार्ग से यदु रजधानी मथुरा में गमन करो॥१२

मुखोल्लास—दोहा

यदि यह आशङ्का करौ, कौन मार्ग ह्वै जाउँ ।
हंस बताऊं तुमहिं मैं, सरल विमल सो ठाउँ ॥१२॥

मूल की भाषा पद्य-छन्द गीतिका

अति कठिन मति अक्रूर के सँग गोपिका जीवन धनी ।

जा पंथ गवने तुरत वे श्री कृष्ण कुँवर शिखामनी ॥
है मंगलीकन में तिलक वह भूमि जगत उजागरी ।
तुम जायवे के योग्य हौ ता माहिं ह्वै मथुरा पुरी ॥१२॥

सारांश–सोरठा

लोक प्रसिद्ध प्रधान, कृष्ण गये जा मार्ग ह्वै ।
मथुरा कौं प्रस्थान, करहु हंस ता पथ सपदि ॥१२॥

००००

गलद्वाष्पासारप्लुतधवलगण्डा मृगदृशो
विदूयन्ते यत्र प्रबलमदनावेशविवशाः ।
त्वया विज्ञातव्या हरिचरणसङ्गप्रणयिनो
ध्रुवं सा चक्राङ्गीरतिसख शताङ्गस्य पदवी ॥१३॥

टीका—तस्याः सूचककममाह गलदिति । हे चक्राङ्गीरतिसख हंसीरतिसहाय अनेन विरहदहनवहनवेदनाभिज्ञया झटिति तत् कर्मणि प्रसक्तिः सूचिता हरिचरणसङ्गप्रणयिनः शताङ्गस्य रथस्य सा प्रसिद्धा पदवी पन्था त्वया ध्रुवं निश्चितं विशेषेण ज्ञातव्यमित्यन्वयः । हरिचरणयोः सङ्गे संसर्गे यः प्रणयः प्रेमाशयः यस्यास्ति तस्य । तत्र गमकमाह य एतादृश्या मृगदृशो विदूयन्ते उपतपन्ति दुदु उपतापे दिवादिः इदानीं क्षणादुपरि समागमिष्यति कृष्ण इति कृत्वा पथि तदवलोकनार्थं ता सततमेव वर्त्तन्ते तस्यादर्शनात्तापश्चेति भावः । कीदृश्या गलन्तः अवस्तोबाष्पसारा अश्रुबिन्दवस्तैः प्लुतौ व्याप्तौ अतएव धवलौ गण्डौ यासां ताः, पुनः कीदृश्यः प्रबलोऽत्युद्भटो यो मदनावेशः प्रकाशस्तेन विवशाः आतुराः । शताङ्गः स्यन्दनो रथ इत्यमरः ॥१३॥

अनु०—जिस मार्ग में नयन-जलधाराओं से धवल-कपोल धोए जाने वाली गोप-सुन्दरियाँ प्रबल-प्रेमावेश में व्याकुल होकर उन्मादिनि (पगली) की तरह विलाप कर रही हैं तथा जिस मार्ग में कृष्ण-

चरण-स्पर्शानुरागी उनके रथ-चक्र के चिन्ह विद्यमान हैं; उसी मा र्ग से अक्रूर श्रीकृष्ण को मथुरा ले गये हैं, तुम भी उसी मार्ग गमन करना ॥१३॥

मुखोल्लास-दोहा

अति करुणा चित धारि के, लखौ मार्ग वह हंस।
अब विलम्ब नहिं कीजिये, सुनिये खग अवतंस ॥१३॥

मूल की भाषा पद्य-छन्द गीतिका

हरि चरण सँग तें प्रीति जा की पंथ वा रथ को जहाँ।
वश भईं प्रवल अनङ्ग के मृग लोचनी ठाढ़ी तहाँ॥
दुख पाय श्वेत कपोल जिन के भये आँसुन पाँति सों।
वह मार्ग हंसी रमण निश्चय जानियों या भाँति सों ॥१३

सारांश-सोरठा

मारग माहिं मराल, लोचन वारि वहावती।
ठाढ़ी होंगी बाल, काम वती मृग लोचनी ॥१३॥

००००

पिबन् जम्बुश्यामं मिहिरदुहितुर्वारि मधुरं
मृणाली भुञ्जानो हिमकरकलाकोमलरुचः।
क्षणं हृष्टस्तिष्ठन्निबिडबिटपे शाखिनि सखे
सुखेन प्रस्थानं रचयतु भवान् वृष्णिनगरे ॥१४॥

टीका—ननु पथि आहार-विश्रामस्नानाभावात् कथं गन्तव्यमितिचे तत्र तत् प्राचुर्यं कथयति पिबन्नित्यादि एवमेवं कुर्व्वन् हे सखे इ प्रेमसम्बोधनं प्रार्थनासिद्धये नहि सख्युः प्रार्थना-निरास्या इति भावः भवान् वृष्णिनगरे मथुरायां सुखेन प्रस्थानं गमनं रचयतु करोतु इत्य न्वयः। किं कुर्व्वन् मिहिरदुहितुः सूर्य्यकन्यायाः अनेन पवित्रत्वमुक्तं वा।

पिबन् कीदृक् जम्बुश्यामं पक्वजम्बुवत् श्यामं अनेन निर्म्मलतोक्ता पुनः कीदृक् मधुरं अनेनोपादेयत्वमुक्तं पुनः किं कुर्व्वन् मृणाली भुञ्जानः खादन् बहुवचनेनाति-सुलभतोक्ता मृणालीति अल्पत्वविवक्षायामीप्रत्ययः कीदृशीः हिमकरस्य चन्द्रस्य कलावत् कोमला मनोज्ञा रुचिः कान्तिर्यासां अनेन अतिकोमलतोक्ताः पुनः किं कुर्व्वन् शाखिनि वृक्षे हृष्टः सन् क्षणं तिष्ठन् कीदृशे निबिडविटपे घनशाखाचये अनेनाधिकरणसञ्चरणाभावात् शीतलतया वासयोग्यतोक्ता अस एतादृक् वृक्षदर्शनेन हृष्टता च चिर-कालवासनिषेधाय क्षणमित्युक्तं एतेन पान-भोजनाश्रयलाभादतिसु-खदः पन्था अतस्तेनैव मथरा सुखेन गन्तव्यमित्यनायासेनोपकरणं सूचितम् मिहिराकणपूषण इत्यमरः। मधुरस्तु रसे विषे मधुरं रसवत् स्वादुः, प्रियेषु मधुरोऽन्यवदितिविश्वः। विटपः पल्लवे शिङ्गे विस्तरे स्तम्बशाखयोरिति विश्वः ॥१४॥

अनु०-हे सखे! तुम यमुना के जामन की भाँति श्याम-सलिल का पान करते हुए तथा चन्द्र-किरण-समान कोमल कान्ति वाले कमल नालों का आस्वादन करते हुए एक क्षण आनन्दित हो सघन, श्या-मल शाखा वाले वृक्ष पर विश्राम-सुख का अनुभव कर सानन्द मथुरापुरी को गमन करना ॥१४॥

### मुखोल्लास-दोहा

खान पान भो कौं कहा, मिलै पंथ के माहिँ।
हंस सकल तुम सों कहौं, या कौ संशय नाँहिँ ॥१४॥

### मूल की भाषा पद्य-छन्द गीतिका

जल पियत जमुना कौ मधुर द्युति श्याम जामन की भली।
रुचि करत भोजन शशि-कला सम श्वेत कंजन की नली॥
क्षण इक करत विश्राम शाखा सघन विटपन की जहाँ।
सुख सहित गवनौ हे सखे वह यादवन कौ पुर तहाँ ॥१४॥

सारांस-सोरठा

कालिन्दी जल पान, कमल नाल भोजन करन।
विरमत विटप सुथान, हंस जाउ मथुरा पुरी ॥१४॥

◇◇◇◇

बलादाक्रन्दन्ती रथ-पथिकमक्रूर-मिलितं
विदूरादाभीरीततिरनुययौ येन रमणम्।
तमादौ पन्थानं रचय चरितार्था भवतु ते
विराजन्ती सर्वोपरि परमहंस-स्थितिरियम् ॥१५॥

टीका—प्रथमं गन्तव्यं वर्त्मोपदिशति। तं पन्थानं आदौ प्रस्थानोपक्रमे रचय गच्छेत्यन्वयः। धातूनां बह्वर्थत्वात्। यद्वा तं पन्थानं प्रति आदौ रचय यत्नं कुरु प्रथमं तमेव पन्थानमारुहेत्यर्थः। हे परमपूज्य यद्वा परा उत्कृष्टा मा शोभा यस्य अतिसुन्दरेत्यर्थः। हे हंस तव इयं स्थितिः सर्व्वोपरि सर्व्वेषामूर्ध्वं विराजन्ती दीप्यमाना सती चरितार्था भवतु प्रोत्साहजननं हंसः सूर्य्यः स तु सर्व्वोपरिविराजितत्वमपि हंस अतः सर्व्वोपरिविराजमानत्वात् सूर्य्यता तवास्तु इत्यर्थः अथ च परमहंसः परिमानो सर्व्वेषां सरसि सहस्रदलकमले तिष्ठति अतश्चतुर्विंशतितत्वानामुपरि वर्त्तते तवाप्यवस्थितिः तथा भवतु सर्व्वोपरि उड्डीयमानत्वात् कोऽसौ पन्था इत्यत आह येन पथा आभीरीततिर्गोपवनितासमूहः बलाद्वार्य्यमाणा अपि विदूरमतिदूरं रमणं श्रीकृष्णं अनु पश्चात् ययौ कीदृशी आक्रन्दन्ती श्रीकृष्णेत्यादि उत्क्रोशन्ती यद्वा रुदती तथा श्रीदशमे-विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति (१०-३९-३१) कीदृशं रथपथिकं रथेन पान्थं अनेन बलनिवारणाभावो झटितियानञ्चोक्त पुनः कीदृशं अक्रूरमिलितं अक्रूरेण सह बसन्तं अनेन तदानीं स्वकीयाभिप्रायनिवेदनाभावोऽप्युक्तः अथच नास्ति क्रूरो यस्मात् सोऽक्रूर इत्यर्थः। तेन सह मिलिते जनेऽभिप्रायमपार्थकं चेति चार्थः। हंसो विहङ्गभेदे स्यात्

सूर्य्ये विष्णौ हयान्तरे, योगि-मन्त्रादिभेदेषु परमात्मनि मत्सरे, निर्लोभनृपतौ हंसः शरीरमरुदन्तरे इति विश्वः। स्थितिः स्त्रियामवस्थाने मर्य्यादायां च सीमनि ॥१५॥

अनु०—हे हंस ! अक्रूर के साथ हमारे प्राण-वल्लभ के गमन करने पर जिस मार्ग में बहुत दूर तक उच्च स्वर से क्रन्दन करती हुई गोप-सुन्दरिओं ने उनका अनुगमन किया था, प्रथम तुम उसी मार्ग से गमन करना इसी से तुम्हारा हंस रूप में श्रेष्ठ-जन्म सफल होगा ॥१५॥

मुखोल्लास-दोहा

चिन्ह चमत्कारीन सों, हंसहि करत प्रबोध।
ललिता निज सन्देश हित, कहत पन्थ कौ शोध ॥१५॥

( श्री कृष्ण पक्ष में )

मूल की भाषा पद्य—छन्द गीतिका

अक्रूर सँग रथ पर चढ़े श्री कृष्ण जो मारग ठयौ।
बहु दूर गोपी गन रुदन बल तें करत पीछे गयौ॥
सो पन्थ पहलें रचहु रचहु तातें होय कुल कारज गती।
जो लसति सर्वोपरि तुम्हारी यह सुभग हंसस्थिती ॥१५॥

सारांश-सोरठा

जा पथ गये मुरारि, रथ पर सँग अक्रूर के।
सोई निज उर धारि, हंस वही मारग गहौ ॥१५॥

( आत्मज्ञान पक्ष में )

मूल की भाषा पद्य-कवित्त

अहो हंस रूप जीव क्रोध सों रहित गुरु
तासों मिलि देह रूपी रथ पै चढ़े भये।
आतम स्वरूप ज्ञान बल सों विचार किये
शान्त चित्त योगी जन जाही मग ह्वै गये॥

पहले सो पन्थ रचौ तुम निज मुक्ति हेतु
जहाँ वीतरागन के सुयश रहे छये।
सर्वोपरि राजमान चरित तुम्हारे होंहि
परम हंस स्थिति सुहावै जग वन्द्य ये ॥१५॥

०००००

**अकस्मादस्माकं हरिरपहरन्नंशुकचयं**
**यमारूढो गूढप्रणयलहरीं कन्दलयितुम् ।**
**भवानग्रे तस्मिन्नवदलकदम्बेन निविडे**
**कदम्बे कादम्बेश्वर पथि विलम्बं रचयतु ॥१६॥**

टीका—पथि पथि रमणीय-हरिविहारस्थाने कदाचिद्विलम्बमाचरन्न-स्माकं कार्ये कालक्षेपो भवतीति तत् प्रार्थयति । अकस्मादिति । हरिः श्रीकृष्णः अकस्मात् अतर्कित एव अस्माकमंशुकभरं वस्त्रसमूहं अपहरन् सन् यं आरूढः, हे कादम्बेश्वर हंसराज पथि तस्मिन् कदम्बे विलम्बं न रचयतु न करिष्यतीत्यर्थः । प्रार्थनायां अंशुकाहरण-रोहणयोः सम-कालिता द्योतनाय णिजन्तप्रयोगः । तेन च भयसम्भ्रान्ततयाऽशीघ्रं गम्यते नन्वसावीश्वरः कथं युष्मदंशुकहरणं गर्हितं कृतवान् इत्यत आह-गूढप्रणयलहरीं मनोविहितत्वाद्गूढत्वं अतिगुप्तप्रेमोर्म्मिं कन्दलयितुं प्रेमप्रकाशार्थं अपहरन्नित्यर्थः । तस्मिन् कीदृशे नवदलकदम्बे नूतनपत्रस-मूहयुक्तेन नवं अनु कदम्बं यस्य अनेनातिमनोहरत्वं अतएव-निविडे निरन्तर-शाखाप्रतानादिके अग्रे पुरतः एतेन नवपल्लवशाली-वृक्षस्या-ग्रतो दर्शनेन शुभकुशलतोक्ता । तथा चोक्तं "वामे मधुरवाक् पक्षी वृक्षाः पल्लविनोऽग्रतः, यातुर्दक्षिणभागस्थं धेनुवृन्दं सुभावहमिति । अत्र क्वचित् पुस्तके तव श्रान्तस्यान्तः स्थगितरविलम्ब-किशलयैः । कदम्बे का-दम्बः त्वरितमवलम्बः स भविता इति उत्तरार्द्धं श्लोको दृश्यते । हे काद-म्बः राजहंस स-कदम्ब-श्रान्तस्य तव त्वरितं शीघ्रं अवलम्बो अवलम्बनीयो

भविता भविष्यति इत्यन्वयः। स कीदृक् किशलयैर्नवपल्लवै रन्तर्मध्य-स्थगित आच्छादितो निवारितो विलम्बो येन य एव अनेन तापाभावः हरिरित्युपचितपदोपन्यासः हरणाशक्तत्वात् चेलं वसनमंशुकमित्यमरः। प्रणयः प्रेम्णि विश्रम्भ इति च। कन्दलं त्रिषु कपालेष्युपरागे नवाङ्कुरे इति मेदिनी कन्दलशब्दान्नाम निविडं त्वरम्। कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके। कादम्बः कलहंसे स्यादिति विश्वः। विलम्बस्तु प्रतिबिम्बे स्यान्माने पुं नपुंसकमिति मेदिनी ॥१६॥

अनु०-हे कलहंस! अकस्मात् हमारे वस्त्रों को अपहरण कर श्रीकृष्ण-चन्द्र कात्यायनी-व्रत-परायणा गोपीगण के निगूढ़-प्रेम को बाहर प्रगट करते हुए ( अर्थात् श्रीकृष्ण से प्रेम करने में उनकी लोक-लज्जा का परित्याग कर ) जिस कदम्ब-वृक्ष पर चढ़ गये थे और जिस कदम्ब के मध्य-भाग में सूर्य किरणें भी प्रवेश नहीं कर पाती है उस सघन कदम्ब-वृक्ष पर कुछ विश्राम कर तुम अपने मार्ग श्रम को दूर करना ॥१६॥

### भागरूप-दोहा

ललिता मथुरा जान हित, निज सन्देश सुनाय।
कहत हंस सों, और हू, शोध सुनौ चित लाय ॥१६॥

### मूल की भाषा-पद्य ( छन्द गीतिका )

हम सबन के हित गुप्त की विधि प्रकट करि बे की करी।
बहु वसन हरि कें चढ़े जाय कदम्ब पै पौचक हरी॥
हे हंस! जिन किसलय सघन में बिम्ब दिनमणि कौ दुरै।
सो तरु तुम्हारौ ह्वै सहारौ सपदि पथ कौ श्रम हरै ॥१६॥

### सारांश-सोरठा

हरे चीर ब्रज राज, लै कर धरे कदम्ब पै।
सोई तरु वर आज हरै तुम्हारौ पन्थ श्रम ॥१६॥

००००

किरन्ती लावण्यं दिशि दिशि शिखण्डस्तवकिनी
दधाना साधीयः कनकविमलद्योतिवसनम् ।
तमालश्यामाङ्गी सरलमुरलीचुम्बितमुखी
जगौ चित्रं यत्र प्रकटपरमानन्दलहरी ॥१७॥
तया भूयः क्रीडारभसविलसद्वल्लववधू
वपुर्वल्लीभ्रश्यन्मृगमदकणश्यामलिकया ।
विधातव्यो हल्लीशकदलितमल्लीलतिकया
समंतादुल्लासस्तव मनसि रासस्थलिकया ॥१८॥युग्मकम्

टीका—ततो ऽग्रे ऽति-रमणीय रासस्थली तिष्ठति तद्दर्शनार्थमपि झटिति ततो गन्तव्यमित्यत आह किरन्तीति द्वयेन भूयः पुनरपि तया रासस्थलिकया रासविहारस्थानेन तव मनसि समन्तात् सर्व्वतः उल्लासो-विधातव्यः समन्तादित्यनेन सर्व्वत्र निरतिशयरमणीयतोक्ता कदम्बेनो-ल्लासः कृत एव पुनरपि रासस्थलिकयेति पुनरर्थः भूयः पदोपादानं कीदृश्या क्रीडारभसेन क्रीडायां हर्षेण विलसन्त्यो या गोपवध्वः तासां वपुर्वल्लीभ्यः अङ्गलताभ्यः भ्रश्यन्तो ये मृगमदकणास्तैः श्यामलिकया श्यामवर्णया अनेन कस्तुरीकणानां बाहुल्यं क्रीडायामतिशयाभिनिवेशः सूचितः । श्यामलिकयेति स्वार्थे कस्तुलः स्त्रीत्वादौ टाप् पुनः कीदृश्या हल्लीसकेन स्त्रीणां मण्डलाकारनर्त्तनेन दलिताः निष्पिष्टा मल्लीलता यस्यां बहुव्रीहौ कः । रभसो वेगहर्षयोरित्यमरः । कणोऽति सूक्ष्म धान्यांशे इति मेदिनी । नारीणां मण्डलाकारनृत्यं हल्लीसकं विदुः, नटीगृहीत-कण्ठीनामन्योन्यात्तकरश्रियाम् । नर्त्तकीनां भवेद्रासो मण्डलीभूयनर्त्तनमिति रासलक्षणं तस्य स्थली,किरन्तीत्यादि यत्र रासस्थलिकायां प्रकट-परमानन्द-लहरी प्रकटा मूर्त्तिमत्तया आविर्भूता या परमानन्दस्य लहरी महोर्म्मिः, चित्रं आश्चर्य्यं जगौ गीतवती चित्रं अनन्यसाधारणतया

अद्भुतं अथच परमानन्दलहर्या मानं चित्रमाश्चर्य्यमेव । कीदृशी दिशि दिशि लावण्यं किरन्ती विक्षिपन्ती पुनः कीदृशी शिखण्डीनां स्तवको गुच्छः तद् यु...काः पुनः कीदृशी साधीयोऽत्युत्तमं यत् कनकं तद्वि-मलद्योतनशीलं अर्थात् पीतं वसनं दधाना धारयन्ती । तमालोऽतिश्या-मवृक्षविशेषः तद्वत् श्याममङ्गं यस्या ...। महतोऽपि यावत् या मुरली-तया चुम्बितं मुखं यस्याः । सरलः पूतिः काष्ठेनाथोदाराधकयोः त्रिया-मितिमेदिनी ॥१७-१८॥

अनु०—उसी कदम्ब-वृक्ष पर विराजमान होकर चारों दिशाओं में अपनी लावण्य-रूपराशि विकीर्ण करते हुए मयूर-पिच्छ विभूषित, पीताम्बरधारी, तमाल-श्यामल-शरीर साक्षात् परमानन्दस्वरूप श्रीकृष्णचन्द्र ने अधरों पर मुरली धारण कर अलौकिक गान किया था ॥१७॥

अनु०—श्री रासक्रीडा में अत्यन्त आनन्द मग्न व्रज सुन्दरीगण के श्री अङ्ग से बार २ मृगमद विन्दु कण गिरने से जो श्यामल-स्वरूप हो गई है ; तथा 'हल्लीस-नृत्य' में ( जिस नृत्य में अनेक नर्तकी मंडल विचरण करे तथा एक मात्र नट नृत्य करे उसे हल्लीस-नृत्य कहते हैं ) जिस जगह की मल्लिका-लता पद-दलित होगई है उस रास-स्थली का दर्शन करने से तुम्हारे मन में परम आनन्द उत्पन्न होगा ॥१८॥

हंस जाउ वा मार्ग में, वह कदम्ब जा माहिँ ।
जाकी सर बर करन कों, तरु वर दूजौ नाहिँ ॥१७॥

मूल की भाषा पद्य-छन्द गीतिका

जहँ परम आनँद की छटा भइ प्रकट श्री व्रज-चन्द की ।
करि गान अद्भुत दिशन छाई छवि प्रकाश अमन्द की ॥
बहु मोर के पंखन धरें पटपीत रुचि शुचि कनक सी ।
सुठि श्याम अङ्ग तमाल जाके सरल मुरली मुख बसी ॥१७॥

सारांश—सोरठा

जहाँ प्रकट ब्रजचन्द, करी छटा आनन्द की ।
जासु दुकूल अमन्द, हरी कान्ति कलधौत की ॥१७॥
जहँ अतिरिक्त कदम्ब के, चिन्ह मोद प्रद और ।
तिन कों हू अवलोकियों, भयौ रास जा ठौर ॥१८॥

मूल की भाषा पद्य—छन्द गीतिका

अति हर्ष पुनि पुनि केलि कौ जिन गोप ललना छवि मयी ।
तिन अङ्ग तें मृगमद गिरयौ तहँ भूमि सो कारि भयी ॥
उन नृत्य हल्लीशक करत मल्लीलता पायन दली ।
मन होय परमानँद तुम्हारे निरखि सो रासस्थली ॥१८॥

सारांश—सोरठा

मृगमद भूमि लखात, गिरयौ अङ्गना अङ्ग तें ।
चतुर चित्त हरषात, निरखि यहै रासस्थली ॥१८॥

००००

तदन्ते वासन्ती बिरचितमनङ्गोत्सवकला
चतुःशालं शौरेः स्फुरति न दृशौ तत्र विकिरेः ।
तदालोकोद्भेदि-प्रमदभरविस्मारितगति—
क्रिये जाते तावत् त्वयि वत हता गोपवनिता ॥१६॥

टीका—ततोऽपि रम्यमतिनिर्ज्जनं रहस्यस्थानं निर्दिशति तदन्त इति तदन्ते तस्या रासस्थलिकायाः समीपे शौरेः श्रीकृष्णस्य अनङ्गोत्सवकलाः चतुः शालं शालाचतुष्टयं स्फुरति तत्र त्वं दृशौ चक्षुः न विकिरेः न निक्षेपेः तन्न द्रक्ष्यसीत्यर्थः । अनङ्गोत्सवकला कामक्रीडा तत् प्रमोदजनकं चतुः शालेन सह चतुर्थीसमासः । चतसृणां शालानां समाहारः तत् कीदृशं वासन्ती माधवीलता तया विरचितं निर्म्मितं लता-मण्डलचतुष्टय-मित्यर्थः । ननु एतादृङ्मनोरममति-पुण्यञ्च तत् हरिस्थानं किमिति न

द्रष्टव्यमित्यत आह तदेत्यादि तस्य चतुःशालस्यालोकेन दर्शनेन उद्भेदी प्रकाशशीलो यः प्रमदभरः हर्षनिवहः तेन विस्मारित-गतिक्रिया गमनं यस्य त्वयि तथाविधे सति बत खेदे गोपवनिता हता इत्यहं जाने तदालो-कनजन्यानुपमानन्दने त्वयि मथुरा-गमन-स्मरणरहिते सति प्रवृत्तिहरणा-भावाद्विरहजर्जरिता गोपस्त्रियः भविष्यन्तीत्यर्थः । अतो न द्रष्टव्यं एतेन विलम्बे स्त्रीवधपातकं स्यादेवेति ध्वनितम् । अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽति-मनोहरे इति विश्वः । बता-मन्त्रण सन्तोषः खेदानुज्ञान-विस्मये च इति च, वनिता जनितात्यर्थानुरागायाञ्च योषितीत्यमरः॥१६॥

अनु०-उस रास-स्थली के समीप मदनोत्सव-सम्पादन के लिए माधवी लता-निर्मित एक चतुः शाल ( चारों दिशाओं में समकोण) मंडप विशेष है । हे हंस ! उसको ओर तुम दृष्टिपात भी न करना । कारण कि उसके देखने मात्र से चित्त में अत्यन्त आनन्दोदय होने से तुम अपना मार्ग-गमन भूल जाओगे और उसी के देखने में तुम्हारा मन मग्न हो जावेगा और उस समय तुम ऐसा कहने लगे कि, मैं श्रीकृष्ण के निकट सन्देश पहुँचाने में असमर्थ हूँ ? तो बेचारी गोप-सुन्दरियों की आशा-भङ्ग हो जाने से वे मर ही जावेंगी, यह मैं निश्चय जानती हूँ ॥१६॥

प्रागरूप-दोहा

भू मंडल में जद्‌पि बहु, दृश्य अनेक प्रकार ।
पै, मराल ! सब सों अधिक, कृष्ण केलि आगार ॥१६॥

मूल की भाषा-छन्द गीतिका

ता रास मंडल में प्रकाशित माधवी की बेलि कौ ।
सुन्दर सुहायौ कृष्ण हित तहँ सदन क्रीड़ा केलि कौ ॥
तुम देखियों जिन वाहि नहिँ निज चाल भूलौ प्रेम सों ।
यह गोप बनिता प्राण त्यागहिँ विरह दुख के नेम सों ॥१६॥

सारांश-सोरठा

लखत केलि गृह हंस, काज, चाल, चूकौ सकल।
गोपी जन विध्वंस, होहिँ रावरी भूल सौं ॥१९॥

◇◇◇◇

ममं स्तादर्थानां क्षतिरिह विलम्बाद्यदपि ते
विलोकेथाः सर्वं तदपि हरिकेलिस्थलमिदम् ।
तवेयं न व्यर्था भवतु शुचिता कः स हि सखे
गुणो यश्चाणूरद्विषि मतिनिवेशाय न भवेत् ॥२०॥

टीका—इदानीं विलम्बे दोषमुद्भाव्य परोपकारपरस्य हंसस्य चित्तानुकूलायाह मम स्यादिति यद्यदि ते तव इह चतुःशालावलोकने विलम्बात्समार्थानां प्रयोजनानां क्षतिः हानिः भवेत् तदपि तथापि इदं हरिकेलिस्थानं सर्व्वं समग्रं विलोकेथाः पश्य ननु किमित्यतित्वरयानुष्ठेयकार्य्यस्य विघ्नेऽनुमतासि इत्यत आह तव इयं शुचिता शुद्धता व्यर्था न भवतु विफला न स्यात् अथच शुभ्रता इति शुचिः । ननु तद्दर्शनाभावेनैव किमिति शुचिता व्यर्थता भवेदित्याह-सखे हि निश्चितं स को गुणः यश्चाणूरद्विषि श्रीकृष्णे सति निवेशाय मनो न भवेत् । हरौ मनः प्रवेशविधायकं विना कोऽपि विद्याशुद्धत्वादिगुणः न भवतीत्यर्थः । एतेन श्रीकृष्णस्थानावलोकनादिना तस्मिन् आवेशातिशयेन शुचिता सफलैव स्यादित्यर्थः । शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोश्च योषिति । ग्रीष्मे हुतवहेऽपि स्यादुपधा शुद्धमन्त्रिणि । ज्येष्ठेऽपि स्यादुपधा शुद्धमन्त्रिणि । जलद्रोणयां शुचिः प्रोक्ता तीक्ष्णाग्रेषु च वस्तुषु । शुचिः शङ्खनखे प्रोक्तः शुचिस्तरसो भावयो इतिविश्वः । गुणोऽसौ व्याम प्रधाने रूपादौ सूद-इन्द्रिये । त्यागे सौर्य्यादि सत्वादि सन्ध्याद्यावृत्ति रज्जुषु । शुक्लादावपि वाच्याङ्ग इति मेदिनी ॥२०॥

अनु०—इस व्रज में श्रीकृष्णचन्द्र की लीलास्थली का दर्शन करते हुए तुम्हें विलम्ब हो जाने से हमारे अभीष्ट-कार्य अर्थात् मथुरा

ी के सन्देश ले जाने के कार्य में विलम्ब भले ही हो तथापि
न लीला-स्थली का तुम अवश्य ही दर्शन करना, ऐसा करने
म स्वयं वाह्य एवं अन्तर की पवित्रता प्राप्त करने में सफल होगे
योंकि, हे सखे ! मनुष्य में वह गुण किस काम का जो श्रीकृष्ण
न्द्र में मन आसक्त नहीं करा सकता ॥२०॥

प्राग्रूप-दोहा

हंस बताये शोध ये, पंथ रावरे माँह।
निपट मनो रंजक सकल, सजल सघन तरु छाँह ॥२०॥

मूल की भाषा पद्य-छन्द गीतिका

यदि होयगी तव विलँब तें मम अर्थ की क्षति हे सखे।
इन सकल क्रीड़ा थलन कों तौ हू न रहियों बिन लखे ॥
शुचिता तुम्हारी व्यर्थ यातेँ होय नाहिँ यह फल महा।
चाणूर रिपु में लगत जो नहिँ सो सुमति अरु गुण कहा ॥२

सारांस-सोरठा

यद्यपि किये विराम, होय हानि मम अर्थ की।
तदपि कहे जो धाम, तिन्हें अवश्य निहारियों ॥२०॥

००००

सकृद्वंशीनादश्रवणमिलिताभीरवनिता-
रहःक्रीडासाक्षी प्रतिपदलतासद्मसुभगः।
स धेनूनां बन्धुर्म्मधुमथनखट्वायितशिलः
करिष्यत्यानन्दं सपदि तव गोवर्द्धनगिरिः ॥२१॥

ीका-अतः परमपि रमणीयं हरिविहारस्थानमस्ति तद्दर्शनौचित्याशये
सकृदिति। स प्रसिद्धः गोवर्द्धनः गिरिः सपदि दर्शनक्षण एव तवान
करिष्यतीत्यन्वयः। स कीदृक् सकृदेव वंशीनादस्य श्रवणेन मिलि

सङ्गता: या आभीरीवनिता गोपस्त्रिय: तासां रहसि एकान्ते या क्रीडा तस्या: साक्षी साक्षाद्द्रष्टा यद्वा रह: क्रीड़ा सुरतक्रीड़ा एतेन अत्यन्तरमणीयत्वं विजनञ्चोक्तं प्रतिपदं स्थाने स्थाने यल्लतामयं गृहं तेन सुभग: सुन्दर: पुन: कीदृक् धेनूनां बन्धु: यथेष्टाचारविश्रामस्थानात् इन्द्राद्रक्षणाच्च पुन: कीदृक् मधुमथनस्य श्रीकृष्णस्य खट्टायिता खट्टे वाचरिता शिला पाषाणो यस्य तत्र शयनाचरणात्। एतेन तद्दर्शनार्थमपि झटिति गन्तव्यमित्युक्तम्। सकृत् सहैकवारे स्यादित्यमर: । रहोऽपि गुह्ये सुरते च तत्वे इति विश्व:। पदं शब्दे च वाक्ये च व्यवसायोपदेशयो:। पदे तच्चिन्हयो: स्थाने त्राणयो: रङ्कवस्तुनोरितिमेदिनी । प्रतिपत्रे निधौ वीप्सानुसरणादौ प्रयोगत इति विश्व:। प्रतिपदमिति वीप्सायामित्यव्ययीभाव:। बन्धु: स्यात् पुंसि बन्धुके मित्रेऽरिवान्धवे इति मेदिनी। सपदि द्राङ्मङ्क्षु च द्रुते इत्यमर। सपदि तत्क्षणे इत्यमर:॥२१

अनु०-केवल एक बार ही मुरली-निनाद सुनकर ब्रज की गोप-सुन्दरी गण श्रीकृष्णचन्द्र के निकट आगमन करती थीं। उनकी एकान्त-निकुञ्ज क्रीडा का जो साक्षात् द्रष्टा है एवं जो स्थान-स्थान पर लता निर्मित निकुञ्ज कुटीरों से सुशोभित है तथा सब गौ-वत्सों का बन्धु है। लीला-विलास के समय जिसकी शिलायें श्रीकृष्णचन्द्र की सुख-शैय्या बन जाती हैं उस श्रीगोवर्धनगिरि के दर्शन मात्र से तुमको परम आनन्द प्राप्त होगा ॥२१॥

प्रागूप-दोहा

चलत पन्थ अवलोकिये, कौतुक हंस ! विचित्र ।
गिरि गोवर्द्धन के मिलैं, दर्शन परम पवित्र ॥२१॥

मूल की भाषा-पद्य ( कवित्त )

एक बेर श्रवन सुनत टेर बाँसुरी की,
जुरि आयौ तहाँ गोप नारिन कौ गन है

साक्षी है तिन की एकान्त केलि हरि कौ वह,
बहु लता कुञ्जन तें सोहत सघन है ॥
प्यारौ सुरभीन कौ-शिला हैं जाकी खाट जैसी,
तिन पर करी मधु मथन शयन है ।
पजू सित कंठ ताहि जाय के निहारौ वेगि,
आनँद लिहारौ करै गिरि गोवर्द्धन है ॥२१॥

सारांश—सोरठा

जाकी शिला विशाल, कृष्ण करी तिन पर शयन ।
जो तरु लता तमाल, रुचिर रम्य सुरभीन तें ॥२१॥

◇◇◇◇

तमेवाद्रिं चक्राङ्कितकरपरिष्वङ्गिरसिकं
महीचक्रे शङ्कमहि शिखरिणां शेखरतया ।
अरातिं ज्ञातीनां ननु हरिहयं यः परिभवन्
यथार्थं स्वं नाम व्यधित भुवि गोवर्द्धन इति ॥२२॥

टीका—तन्माहात्म्यं वर्णयति तमेवेति । तमेवाद्रिं गोवर्द्धनाख्यं महीचक्रे भूमण्डले शिखरिणां पर्व्वतानां शेखरतया श्रेष्ठतया चिह्ने तृतीया उपलक्षितं शङ्के महि मन्यामहे एवशब्द इतरयोगनिरासकः अन्यं नेत्यर्थः । तत् कीदृशं चक्रेणाङ्कितश्चिह्नितः करो यस्य स तथा हरिरित्यर्थः । तस्य परिष्वङ्गे आश्लेषे रसिकश्चतुरः इत्यलभ्य—सौलभ्यं पुण्यशालि-त्वञ्चोक्तं शेखरत्वे हेतुमाह ननु यस्मात् आमन्त्रणे वा ज्ञातीनां अरातिं शत्रुं हरिहयं इन्द्रं परिभवन् सोऽयमद्रिः भुवि पृथिव्यां गोवर्द्धन इति प्रसिद्धं स्वं नाम यथार्थं व्यधित अकरोत् खरतरवातवर्षणात् गवां रक्षणात् गां वर्द्धयतीति गोवर्द्धन इति व्युत्पत्त्या नाम्नः सार्थकत्वं चक्राकृतित्वात् चक्रं मह्या व चक्रं महीचक्रं चक्रांगणे चक्रवाके चक्रं

सैन्यरथाङ्गयोः । भ्राम जाले कुलालस्य भाण्डे वा वक्षयोरपि । अम्भसामपि सम्वर्त्तं इति विश्वः । ननु प्रश्ने चानमयेऽनुज्ञानेप्यवधारणे । आमन्त्रणे सम्भ्रमे चेति ॥२२॥

अनु०—जो श्रीकृष्णचन्द्र के चक्र-चिह्नित कोमल करों के स्पर्श-सुख का रसज्ञ है इस श्रीगोवर्धन पर्वत को हम पृथ्वी के सब पर्वतों में सर्वश्रेष्ठ मानती हैं। जिस इन्द्र ने पर्वत-जाति के पक्षों का छेदन किया था, वही इन्द्र अपने यज्ञ-भङ्ग के कारण ब्रज पर कुपित होकर एक सप्ताह तक घोर जलधारा वर्षण करने लगा था उस समय गो-वत्स तथा गोप-गोपियों सहित समस्त ब्रज की रक्षा करने से इसका गोवर्द्धन नाम सार्थक हुआ है ॥२२॥

प्राग्रूप—दोहा

धरा माहिँ सब गिरिन कौ गोवर्द्धन अवतंस।
ताके दर्शन कीजिये जात मधुपुरी हंस ॥२२॥

मूल की भाषा पद्य ( छन्द अवङ्गम )

चक्राङ्कित कर कृष्ण के जो धारण भयौ।
भूमि गिरिन शिर-मौर हेतु यह ठयौ॥
नगरिपु इन्द्रहि जीति अखिल मंडल मही।
गोवर्द्धन निज नाम ठीक पदवी लही ॥२२॥

सारांश—सोरठा

जिन कर कमलन चक्र तिन में यह शोभित भयौ।
जीत्यौ नगरिपु शक्र गोपालक गिरिराज ब्रज ॥२२॥

◇◇◇◇

तमालस्यालोकाद्‌गिरिपरिसरे सन्ति चपलाः
पुलिन्द्यो गोवि पः

**शनैस्तासां तापं क्षणमपनयन् यास्यति भवा-**
**नवश्यं कालिन्दीसलिलशिशिरैः पक्षपवनैः ॥२३॥**

टीका—प्रासङ्गिकोपकाराय तत्रैति कर्त्तव्यतामुपदिशसि। तमालस्येति गिरिपरिसरे गिरिपर्य्यन्तभूमौ तमालवृक्षस्यालोकात् दर्शनात् श्रीकृष्णोऽयमागत इति सम्भ्रमाच्चपलता। गोविन्दस्य स्मरणेन यो रभसो वेगस्तेनोत्तप्तं वपुर्यासां ताः पुलिन्द्यः पुंलिङ्ग शबर विशेष जाति स्तत् स्त्रियः सन्ति अति-श्यामल-तमालतरुदर्शनेन सरूपतया श्रीकृष्णस्य स्मरणं ततस्तप्तशरीरता अतश्चपला चञ्चला श्रीकृष्णोऽयं समागत इति तमालदर्शनेन सम्भ्रमतातिशयास्खलितमनसस्ततो विशेषावधारणासक्तेति वाक्यार्थः अत्र सन्तीति वर्त्तमानप्रत्ययेन सदैव तापास्तत्र वर्त्तन्ते इत्युक्तम्। ततः किमत आह भवान् कालिन्दीसलिलशिशिरैः यमुनाजलेन शीतलैः पक्षपवनैः पतत्रजनितवायुभिस्तासां पुलिन्दीणां तापं अपनयन् खण्डयन् सन् क्षणं व्याप्य अवश्यं शनैर्मन्दं यथाभवति तथा यास्यति एतेन चिरविरहाकुलस्त्रीजनतापहरणेन पुण्यातिशयस्तव स्यादितिभावः। चिरतरविलम्बाभावार्थं क्षणमुक्तम्। परिसरो मतो वृत्तौ देव-पाथान्त प्रदेशयोरिति विश्वः। क्षणो व्यापारशून्यत्वे मुहूर्त्तोत्सवपर्व्वसु इतिच॥२३

अनु०—श्रीगोवर्धन पर्वत के निकट-स्थल में तमालतरु का दर्शन करने मात्र से पुलिंद-वनिताओं के मनमें श्रीकृष्णचन्द्र की मधुर-स्मृति जाग उठने के कारण उनका अङ्ग सकल विरह अग्नि से तपायमान हो जाता है। हे हंस! यमुना नदी के शीतल-जल से आपके पक्ष शीतल हैं। उन्हीं के द्वारा वायु-संचार करके उसी से उन गोपियों के विरह संताप को क्षण मात्र के लिए दूर करते हुए तुम अवश्य धीरे २ गमन करना ॥२३॥

प्राग्रूप-दोहा

हंस तुम्हें कर्त्तव्य है, मार्ग माहिँ यह कर्म।
दीनन के दुख को हरन, सत्पुरुषन कौ धर्म ॥२३॥

मूल की भाषा पद्य ( छन्द अवङ्कम )

ताही गिरि के निकट तमाल निहारि कै।
चञ्चल तन शरीर कृष्ण सुधि धारि कै॥
तिन भिलनिन कौ ताप सलिल यमुना मिली।
पंच पवन सों करहु जाय शीतल भली॥२३॥

सारांश—सोरठा

मान्यौ मोद मिलाप लखि तमाल हरि कान्ति रुचि।
पुनि बिन दर्शन ताप भयौ भील नारीन कों॥२३॥

०००००

तदन्ते श्रीकान्तस्मरसमरधाटीपुटकिता
कदम्बानां वाटी रसिकपरिपाटीं स्फुटयति।
त्वमासीनस्तस्यां न यदि परितो नन्दसि ततो
बभूव व्यर्था ते घनरसनिवेशव्यसनिता॥२४॥

टीका——अति रमणीयगोवर्द्धने कदाचिदिति कर्त्तव्यतां विस्मृत्यैव प्रतिष्ठतीत्याशङ्क्य तदनन्तरं स्थानं कथयति तदन्त इति। तदन्ते गोवर्द्धनस्य समीपे कदम्बानां वाटी नीपवृक्षवाटिका रसिकपरिपाटीं रसिकस्य रसविशेषभावनाचतुरस्य श्रीकृष्णस्य परिपाटीं अनुक्रमं स्फुटयति व्यक्तीकरोति क्रीडास्थानवैशिष्ट्येन क्रीडकस्य चातुर्यं ज्ञायत इति स्फुटीकरणम्। कीदृशी श्रीकान्तस्य हरेर्यः स्मरसमरः कामक्रीडायुद्धः तस्य धाटी अधिकरणीभूतस्थलं वेदिकाभूमिः तया पुटकिता सम्पुटीकृता परितो निर्म्माणेन पुटकितत्वं दधातीति धाटीवधूभ्योऽश्चादेरट् इति अट् प्रत्ययात् तनादिकः नन्द्यादेराकृतिगणत्वाद्यौगिकेयं स्थल्यांवृत्तः। यद्वा धाटी श्रेणी धाडि इतिभाषोक्तिः तया कामसमरश्रेण्या वृक्षाणां पुटकितत्वासम्भवात् प्रत्यक्षं स्मरसमरानुष्ठानमवगम्यते। धाटीति घोटकानामिति राघवपाण्डवीयम्। त्वं यदि तस्यां कदम्बवाटिकायां परितः सर्व्वत·

आसीनस्तिष्ठन् सन् न नन्दसि मुदितो न भवसि तदा तव घनरसनिवेशव्यसनिता निबिडरसाभिनिवेशव्यसनिता व्यर्था विफला बभूव त्वं यदि तत्र तदवलोकनसुखं नानुभवसि तदा निबिडरसावबोधस्य व्यवसायित्वमेव तव नास्तीतिभावः अखण्डं च घनरसो जलं तत्राभिनिवेशोऽवगाहनं तद्व्यसनिता तदासक्तता बभूवेति आशंसायां भविष्यत्यलिट्। अन्योऽपि निबिडसुरताभिनिवेशव्यसनस्तादृक् स्मरसमरस्थानं दृष्ट्वा यदि न नन्दति तदा तस्य सुरताभिनिवेशव्यसनिता व्यर्था अनभिज्ञत्वादिति च ध्वनिः वाटी वृत्ते च मार्गे च वाटी च गृहनिष्कुटे इतिविश्वः। अलं स्यात् कार्श्यलालादि वाच्य मध्यमनुत्तमयोः। घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लौहमुद्गरे इतिच। रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपादपे। मेघपुष्पं घनरस इत्यमरः। फलनं त्वशुभे शक्तौ पानस्त्रीमृगयादिषु। देवनिष्फले पापे विपत्तौ निष्फलोद्यमे इतिमेदिनी ॥२४॥

श्रीगोवर्धनगिरि के प्रान्त भाग में श्रीकृष्णचन्द्र के कन्दर्प-युद्ध-छल से आक्रमण का स्मारक, पुष्परूप पुलकावली-मण्डित एक कदम्ब कुञ्ज है जोकि रसिकेन्द्र चूड़ामणि श्रीकृष्णचन्द्र की एकांत-क्रीडा ( रास-लीला ) के रस-क्रमोचित व्यवहार को प्रगट करता है। अर्थात् उस कुञ्ज-कुटीर के दर्शन मात्र से इस समय भी उसकी रस परिपाटी प्रगट होती है, तुम भी इसका अनुभव करोगे। यदि तुमने उस कुञ्ज-भवन में बैठ कर आनन्द-अनुभव नहीं किया तो शृङ्गार-रस के प्रति तुम्हारी आसक्ति ही निष्फल सिद्ध होगी। अर्थात् तुम्हारा उज्वल-रस परिज्ञान का अभाव ही जान पड़ेगा॥२४॥

प्रागूरूप-दोहा

ता तमाल के निकट ही मिलै भूमि रमनीय।
तहँ कदम्ब की बाटिका, सुनौ हंस कमनीय ॥२४॥

मूल की भाषा पद्य ( छप्पय )

लक्ष्मी पति श्री कृष्ण काम संग्राम पाँति सों।
जन्म्यौ पुलकित अङ्ग जासु सम्पूर्ण भाँति सों॥
रसिकन की मर्याद तुम्हैं सो प्रकट करैगी।
बैठत ही तहँ हंस चित्त आनन्द भरैगी॥
यदि प्रसन्न मन होय नहिँ ता कदम बाटिका के बसैं।
व्यर्थ प्रशंसा होयगी का भयौ सलिल गहरे धसैं॥२४॥

सारांस-सोरठा

अवशि देखिये हंस, वह कदम्ब की बाटिका।
घनरस गति अवतंस, होगी परिपाटी सफल॥२४॥

००००

**शरन्मेघश्रेणी-प्रतिभटमरिष्टासुरशिरः**
**चिरं शुष्कं वृन्दावनपरिसरे द्रक्ष्यति भवान्।**
**यदारोढुं दूरान्मिलति किल कैलासशिखरि-**
**भ्रमाक्रान्तस्वान्तो गिरिशसुहृदः किङ्करगणः॥२५॥**

टीका – तत्रातिचित्रमस्तीति कथयति शरदिति। भवान् वृन्दावनपरिसरे वृन्दावनस्य प्रान्तदेशे चिरं शुष्कं अरिष्टासुरशिरः वृषाकृत्यसुरोऽरिष्टाख्यः तस्य शिरो मस्तकं द्रक्ष्यति। शरन्मेघश्रेणी शरत् कालीनमेघपंक्तिस्तस्याः प्रतिभटं तुल्यं। ननु किमिति चित्रं यत् द्रष्टुं मामादिशसि अत आह शिवसुहृदः किङ्करगणो दासनिचयः यत्र कैलाशशेखरभ्रमाक्रान्तः सन् श्वेताद्रेः तस्य शिखरं शृङ्गं तस्य भ्रमेण भ्रान्त्या व्यतिक्रान्तं व्याप्तं स्वान्तं मनो यस्य सः। शरदि शिखरमारोढुं दूरान्मिलति मूढ़ तो भवति निरन्तरकेलिरसिका अपि यस्य दर्शनात् भ्रमं कुर्वन्ति तद्वान्येषामद्भूतमेवातो दर्शनं युज्यते। दुरादित्यनेनात्युच्चता ध्वनिता मिलतीति वर्तमाननिर्देशात् अद्यापि तेषां भ्रमो नापयातीति ध्वनितम् शुष्कमित्यनेन

पृथिगन्धाभावः उक्तः प्रतिभटशब्दः प्रतिपक्षवाची यत्र तु गौण्या-वृत्त्या सादृश्यमभिधत्ते । तथा च दण्डी-तुल्यार्थः शब्दप्रसङ्गे प्रतिपक्षी प्रतिद्वन्दी प्रत्यनीकविरोधिन इत्यादि । अरिष्टं रिष्टमित्युक्तमरिष्टो वृषभो मतः इत्यनेकार्थध्वनिमञ्जरी । स्वान्तं हृन्मनसं मनः इत्यमरः ॥२५॥

अनु०-श्रीवृन्दावन प्रान्त-देश में शरत्कालीन शुभ्र मेघमाला के समान चिरकाल से शुष्क अरिष्टासुर का मस्तक आपके दृष्टिगोचर होगा । इस विशाल मस्तक को दूर से देखकर आज कल भी भगवान् शंकर के मित्र कुबेर के किंकर यक्षगण कैलाश-पर्वत के भ्रम से उस पर आरोहण करने के लिए आते हैं । इसमें भ्रान्तिमान अलङ्कार है ॥२५॥

प्रागूरूप-दोहा

हंस देखियो मार्ग में, औरहु दृश्य विचित्र ।
अशुचि वस्तु व्यवहार में, लीनी मानि पवित्र ॥२५॥

मूल की भाषा पद्य [ छन्द अवङ्गम ]

शुष्क अरिष्टासुर कौ शिर चिरकाल सों ।
वृन्दा विपिन समीप शरद घन माल ज्यौं ॥
धनद भृत्य कैलाश जानि अचरज यहै ।
आवत दूर तैं चढ़न लखौ तुम हू वहै ॥२५॥

सारांश-सोरठा

शारद मेघ समान सीस अरिष्टासुर पर्यौ ।
किंकर धनद अजान लखत ताहि कैलाश गनि ॥२५॥

००००

स्वन् याहि स्वैरं चरमदशया चुम्बितरुचो
नितम्बिन्यो वृन्दावनभुवि सखे सन्ति बहवः ।

परावर्तिष्यन्ते तुलितमुरजिन्नूपुरस्वानत्व
ध्वानात्तासां बहिरपि गताः क्षिप्रमसवः ॥२६॥

टीका—तत्रातिविरहविवशयोषितामुपकाराय मन्दं मन्दं शब्दयमान एव यास्यतीत्याह स्वनन्नित्यादि । हे सखे वृन्दावनभुवि चरमदशया अन्तिमदशया मरणावस्थया इति यावत् चुम्बितरुचः आक्रान्तकान्तयः बहवो नितम्बिन्यः स्त्रियः सन्ति अतः स्वैरं स्वच्छन्दं मन्दमिति यावत् स्वनन् शब्दं कुर्वन् याहि यास्यतीति प्रार्थनायां भविष्यति लोट् ननु मम शब्दायमाने तासां किं भविष्यतीत्याह तव ध्वानात्तव शब्दात् तासां नितम्बिनीनां बहिर्गता देहनिसृता अपि असवः प्राणाः क्षिप्रं शीघ्रं परावर्त्तिष्यन्ते शीघ्रं शरीरे प्रविशन्तु । ननु कथमेतत् सम्भवत्वत आह-तुलितमुरजिन्नूपुरस्वनात् तुलितः सदृशीकृतो मुरजितः श्रीकृष्णस्य नूपुरस्वो येन अयं भावः हरिविरहविधुराणां तासां तव ध्वनिश्रवणेन श्रीकृष्णस्य नूपुरस्व-भ्रान्त्या श्रीकृष्णोऽयमागत इति हठादालिङ्गनार्थं प्राणाः स्वशरीरेषु झटिति प्रवेक्ष्यन्तीति निसृतानां पुनः प्रवेशासम्भवात् अपगता इति आरम्भोक्तः अपगन्तुमुद्यता इत्यर्थः । एतेन केवलं वयमेव विरहविधुराः त्वां न प्रार्थयामहे किन्तु सर्व्वासामेव व्रजवासिस्त्रीणां एषैवावस्था अतः सर्व्वोपकारकरणाय भवता अवश्यमेतत् कर्त्तव्यमुक्तं भवति । दशा यथा भारते-चक्षुरक्तस्तदनु विमलं सङ्गतिं भावना च, व्यावृत्तिः स्यात्तदनु विषयग्रामतश्चेतसोऽपि । निद्राच्छेदस्तदनुतनुता निस्त्रपत्यञ्च तस्मान्मादो मूर्च्छा तदनुमरणं स्युर्दशाप्रक्रमेण इति अतः चरमदशा मरणं चुम्बितरुच इत्युपादानात् मरणस्य पूर्व्वावस्थेत्युक्तम् मरणदशावर्णनं अमङ्गलत्वात् अरिभिर्न क्रियते । जीवनोपायसम्भवे तु वर्ण्यते । ततश्च कामिनां चिरजीवित्वं तथा च भरतः-पुनः पुनः प्रवर्त्तन्ते निवर्त्तन्ते पुनः पुनः । अवस्था हृदये मूर्त्तो हतश्च चिरजीवेति । दशावस्था दीपवर्त्तो वस्त्रांशे भूम्नि योषितीति मेदिनी ॥२६॥

अनु०-हे बन्धो ! तुम ऊँचे स्वर से मधुर शब्द करते हुए प्रस्थान

। वृन्दावन में प्रायः दशवी (मरण) दशा-सन्न अनेक अ
ो विद्यमान हैं। उनके प्राण देह से बहिर्गत होते हुए
ष्णचन्द्र के चरण-नूपुर के समान तुम्हारा शब्द सुनकर ए
श्रीकृष्णचन्द्र का आगमन जानकर सम्भवतः उनके प्रा
लौट आवेंगे ॥ २६ ॥

आगरूप-दोहा

ललिता कहत मराल सों, कीजै मथुरा गौन।
पुर दुख शीघ्र निवारि कै, सुकृत या सरिस कौन ॥२६॥

मूल की भाषा पद्य [ छन्द अवलम्ब ]

स्वेच्छा सों ध्वनि करत सखा तहँ जाइये।
वृन्दावन बहुबाल मूलक जिमि पाइये॥
कृष्ण नूपुरन सरिस शब्द तव जानि कैं।
निकले वगदहिँ प्रान सपदि अबलानि कैं ॥२६॥

सारांश-सोरठा

करत शब्द स्वच्छन्द, हंस जाउ तुम मधुपुरी।
दुःखित वनिता वृन्द, धीरज दीजै तिनहिँ मग ॥२६॥

००००

त्वमासीनः शाखान्तरमिलितचरहत्तिषि मुदं
दधीथाः भाण्डीरे क्षणमपि घनश्यामलरुचौ।
ततो हंसौ चिन्ह्निखिलनभसश्चिक्रमिषया
स नर्दिष्णुं विष्णुं कलिवदरचक्रं तुलयिता॥२७॥

।—तत्र विश्रामस्थानं कथयन्ती प्रोत्साहयति त्वमासीन इत्यादि।
रे नाम्नि वटे क्षणमपि आसीनः सन् मुदं हर्षं दधीथाः कुरु
य। यद्यपि निरन्तरविरहज्वरविधुरः कोयो बोध्य त्वरितगमनो

त्सुकः तथापि चणं चणकालमपि आसीन इत्यपि शब्दाभिप्रायः। किम्भूते शाखान्तरं शाखानामवकाशे मिलितः प्रतिबिम्बभिया च भुवि सूर्यो यस्य शाखान्तरमिलितत्वं पुनः कीदृशे घना निविडा श्यामला रुचिः कान्तिर्यस्य स तस्मिन् ततः किमत आह ततो भवत उपवेशनात् स भाण्डीरः हंसं सूर्यं च बिभ्रत् नारायणं विष्णुं श्रीवामन-रूपिणं तुलयिता सदृशी करिष्यति। कीदृशं नभसश्चिक्रमिषया अखिलाकाशस्य आक्रमणेच्छया वर्द्धिष्णुं वर्द्धनशीलं विभक्ति-विपरिणामात्। वटुरपि समग्राकाशस्य आक्रमणेच्छया वर्द्धिष्णुः। पुनः कीदृशं कलितदरचक्रं धृत-शङ्खचक्रं विष्णुमपि घनश्यामलरुचं नवजलधरकान्ति अतः हंससूर्यौ शङ्खचक्रसदृशौ वटोऽपि विष्णुस्थानीयः शाखा बाहु-स्थानीया इति वाक्यार्थोपमा। अन्तरमवकाशावधि परिधानान्तर्भेदतादर्थ्ये छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मने चेत्यमरः। भवो भये दरो गर्त्ते दरः शङ्खे च कीर्त्तितः। दराव्ययं मनागर्थे दरी तु कन्दरे मता इति कोषान्तरम्। चिक्रमिषेति कर्त्तृकृत् परशे भावात् क्रमे तुलयितेत्यत्र तुल-शब्दान्नाम-निङन्तात्तुट्ता अन्यथा गुणः स्यात् ॥२७॥

अनु०—हे हंस ! तुम गगन-चुम्बी सघन-श्यामल वर्ण भाण्डीर-वट वृक्ष पर क्षण-मात्र विराज कर विश्राम-सुख का अनुभव करना जिससे वह अपूर्व-शोभा धारण कर मानों सम्पूर्ण आकाश को अति क्रमण करके वृद्धि पाने वाले शंख-चक्रधारी भगवान वामन (उपेन्द्र) देव की समानता को प्राप्त होगा ॥२७॥

प्राग्रूप-दोहा

आगे वृन्दा बिपिन ते प्रस्तुत वट भाण्डीर।
हंस लखौ ता बिटप की छाँह सघन गम्भीर ॥२७॥

[मूल की भाषा पद्य-छन्द बर वै] ध्रुवा छन्द

बट भाण्डीर श्यामघन शोभा जासु।
रवि मीलित हैं ऊँची शाखा तासु॥

तहाँ एक क्षण बैठि चित्त हरषाहिँ ।
तुमहि सहित तापर द्वै हंस दिखाहिँ ॥
चाहत सब नभ करन आक्रमण सोय ।
वढ़न माहिँ तत्पर जाकी मति जोय ।
तहाँ शंख तुम सोहहु चक्र दिनेश ।
तव राजै वट विष्णु सरिस विहगेश ॥२७॥

सारांश—सोरठा

ऊँची शाखा देखि मग में वट भाण्डीर की ।
सुखद चित्त अवरेखि छनिक करौ विश्राम तुम ॥२७॥

००००

त्वमष्टाभि नेत्रैर्विगलदमलप्रेमसलिलै-
र्मुहुः सिक्तस्तस्यां चतुरचतुरास्यस्तुतिभुवम् ।
जिहीथाः विख्यातां स्फुटमिह भवद्वान्धवरथं
प्रविष्टं मंस्यन्ते विधिमटविदेव्यस्त्वयि गते ॥२८॥

टीका—ततोऽनन्तरमप्यति-पुण्यभूमिरस्तीत्याह त्वमष्टाभिरिति । हे चतुर सुन्दर त्वं विख्यातां अतिप्रसिद्धां चतुरास्यस्य ब्रह्मणः स्तुति-भुवं अवस्थानभूमिं जिहीथाः गच्छेः कीदृशो अष्टाभिर्नेत्रैर्विगलन्ति यानि अमलानि प्रेमसलिलानि प्रेमाश्रूणि तैर्मुहुः सिक्तो आर्द्रीकृतो नेत्रे विशिष्यतेऽपि नेत्रैनाभिषेकासम्भवात् सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः । सति विशेष्ये वाधे इति न्यायात् । नेत्रजलैरपि सेचनमवगन्तव्यम् । इह अत्रान्तरे स्फुटमुत्प्रेक्षा अठविदेव्यो वनदेवताः अस्यां भूम्यां त्वयि गते अत्र प्रविष्टं ब्रह्माणं मंस्यन्ते कीदृशं भवद्वान्धवरथं भवान् वान्धवो यस्य एवम्भूतो रथो यस्य यद्वा भवतो वान्धवा राजहंसा रथे यस्य तं वत्सहरणान्तरे हंसवाहनं ब्रह्माणं दृष्टवतीनां भवद्दर्शने पुन-

रपि ब्रह्माभिगमनशङ्का अटविदेवतानां भविष्यतीत्यर्थः । मुहुः सिक्त-स्तम्बामिति पाठे वारं वारं सिक्तो स्तम्बस्तृणादिगुच्छा स्तम्बो गुच्छ-स्तृणादिना इत्यमरः । वीहीथा इति तु श्रोहाङ् गतौ जुहोत्यादि विध्यादिलिङ्क्थासि । चतुरश्चातुरकल्पचकगण्डौ निरन्तरे । दूतौ स्यातां चाटुकारे दृष्टे च नेत्र-गोचरे इति विश्वः । चतुरः पिशुनोऽपि चेति कोषान्तरम् । बान्धवो बन्धुसुहृदाविति मेदिनी ॥२८॥

अनु०—हे बुद्धिमान् हंस ! जिस जगह विशुद्ध-भक्ति भाव के कारण ब्रह्मा के आठ नेत्रों से गिरी हुई प्रेम जल-धारा से बार-बार अभिषिक्त चिर-प्रसिद्ध ब्रह्मा जी का स्तुति-स्थान सिक्त-स्तंभ है अर्थात् जिस स्थान पर ब्रह्मा ने अश्रु-प्लावित नयनों से श्रीकृष्ण-चन्द्र की मञ्जुल-महिमा निरीक्षण कर उनकी स्तुति की है उस स्थान पर तुम जब गमन करोगे तब वन-देवियाँ यही अनुमान करेंगी कि ब्रह्मा का वाहन-हंस उनके वन में आ पहोंचा है अर्थात् ब्रह्मा के वाहन के समान तुमको देखकर वनदेवियाँ पुनः ब्रह्मा को ब्रज में आया समझेंगी ॥ २८ ॥

भागरूप—दोहा

आगे वन भांडीर तें थल पुनीत इक और ।
विनय करी श्रीकृष्ण की चतुरानन ता ठौर ॥२८॥

मूल की भाषा पद्य [ छन्द रौला ]

हे चतुर ! तहां तें जाउ जहाँ विधि स्तुति को थल ।
सिंच्यौ सो पुनि पुनि अष्ट नयन जे स्रवत प्रेम जल ॥
गये तुम्हारे, ख्याति यथारथ वन देवी गन ।
मानहिंगी लखि यान बंधु आगम चतुरानन ॥२८॥

सारांश—सोरठा

पहुँचत तुम्हें मराल स्तुति भूमि शुचि विरंचि में ।
विधि आगम तत्काल जानें वन देवी सकल ॥२८॥

०००० 

उदञ्चन्नेत्राम्भः प्रसरलहरीपिच्छिलपथ-
स्खलत्पादन्यासप्रणिहितविलम्बाकुलधियः ।
हरौ यस्मिन्मग्ने त्वरितयमुनाकूलगमन-
स्पृहाक्लिष्टा गोप्यो ययुरनुपदं कामपि दशाम् ॥२६॥

टीका—कालीयह्रदमतः परं गमिष्यसीत्याह द्वयेन उदञ्चदिति । पुरोऽग्रे तस्मिन् कालीयह्रदे त्वया सलिलं पेयमित्युभयेऽन्वयः । तस्मिन् कस्मिन् हरौ कृष्णे यस्मिन् कालियह्रदे मग्ने सति गोप्यः अनुपदं पदे पदे कामपि अति शोच्यां दशामवस्थां ययुः प्रापुरित्यर्थः कीदृश्यः त्वरितं शीघ्रं यमुनाकूलाय यद्गमनं तस्य स्पृहा आकाङ्क्षया आक्लिष्टाः कथं झटित्येव यमुनाकूलं प्राप्स्याम इति स्पृहा आकाङ्क्षया आकृष्यमाना इवेत्यर्थः । ननु शीघ्रमेव किमिति न गच्छन्तीति चेत्तत्राह । उदञ्चदिति उदञ्चन्ति उच्छलन्ति यानि नेत्राम्भांसि अश्रूणि तेषां प्रसरो वेगस्तस्य लहरीभिस्तरङ्गैः पिच्छिलो यः पन्था तत्र स्खलन्तः अर्धनस्थले अस्थिराः ये पादन्यासास्तैः प्रणिहितः विहितो यो विलम्बः अतिमधुरता तेन आकुला धीर्यासां ताः शोकेन गलन्त्येव प्रवाहपङ्कलमार्गे स्खलत् पादन्यासात्त्वरितगमनाशक्त्या विफलबुद्ध्य इत्यर्थः । प्रसरः प्रणयवेगे इति विश्वः ॥२६॥

अनु०—जिस कालिय-द्रह में श्रीकृष्ण के मग्न हो जाने पर शीघ्र ही यमुना-पुलिन पर पहुँचने की इच्छा करके गोपीगण अपने प्रियतम के विपत्ति की आशंका से निज-नयन-जलधारा से सिक्त मार्ग में जाते समय पग-पग पर स्खलित-चरण हो गई थीं और उनकी बुद्धि क्षण मात्र विलम्ब होने मात्र से व्याकुल हो उठी थी अर्थात् वे जितना ही शीघ्र-गमन की इच्छा करने लगी उतना ही हृदय में श्रीकृष्णचन्द्र के अनिष्ट की आशंका से उनका गमन मन्द होने लगा । उस विलम्ब से अत्यन्त व्याकुल होकर वे एक अकथनीय भाव की दशा में प्राप्त हो गई थीं ॥२६॥

प्राग्रूप-दोहा

जहां कियौ श्री कृष्ण ने काली गौरव ध्वंस ।
ता कालिदह कौं लखौ जाय सपदि तुम हंस ।।२९।।

मूल को भाषा पद्य—छन्द दोवै

डूबे सुनि कालीदह में हरि, गोपिन यह गति लीनी ।
बही दृगन तें लहर नीर की, कीच पन्थ विच कीनी ।।
धरत चरन तहँ डिगत, बुद्धि व्याकुल विलम्ब सों भारी ।
शीघ्र गमन इच्छा सों प्रेरित भईं सकल ब्रज नारी ।।२९

सारांश—सोरठा

करि सर्वाङ्ग स्नान कृष्ण कियौ जो विमल ह्रद ।
ताकौ करि जल पान हंस करौ जीवन सफल ।।२९।।

◇◇◇

मुहुर्लास्यक्रीडाप्रमदमिलदाहोपुरुषिका—
विकाशेन भ्रष्टैः फणिमणिकुलैर्धूमलरुचौ ।
पुरस्तस्मिन्नीपद्रुमकुसुमकिञ्जल्कसुरभौ
त्वया पुण्ये पेयं मधुरमुदकं कालियह्रदे ।।३०।।युग्मकं

टीका—ह्रदे कीदृशे मुहुः पुनः पुनः लास्यक्रीडायां नर्त्तनकेलौ यः प्रमोदो हर्षस्तेन मिलन्ती उज्जृम्भमाना या आहोपुरुषिका आत्मसम्भावना तस्या विकाश आविर्भावस्तेन भ्रष्टैः पतितैः फणिमणिकुलैः कालियस्य फणस्थितैः मणिसमूहैर्धूमला धूम्रारुचिः कान्तिर्यत्र अतिशयहर्षेण नर्त्तनक्रियाभिनिवेशात् पादाघातेन मणीनां प्रभ्रष्टत्वम् । पुनः कीदृशे नीपद्रुमस्य कदम्बवृक्षस्य कुसुमकिञ्जल्कैः पतितरेणुभिः सुगन्धौ पुनः कीदृशे पुण्ये अतिशयपवित्रे हरिविहारपूतत्वात् पवित्रत्वम् । उदकं कीदृशं मधुरं स्वादुरसं यद्वा एतेन विषधरनिवासविषरूपत्वशंका

परिहृता। लास्यं तौर्य्यत्रिके सतं नृत्ये चेति मेदिनी। आहोपुरुषिका दर्पाद्या स्यात् सम्भावनात्मनीत्यमरः। अहमेव पुरुषोऽस्रेति आहोपुरुषिका मयूरव्यंसकादिगणपाठात् रूपसिद्धिः। विकासः पुंसि विजने प्रकाश इति मेदिनी। किञ्जल्कः केशरोऽस्त्रियामित्यमरः। सुरभिः सल्लकी मातृभित् सुरागेषु योषिति। चम्पके च बसन्ते च तथा जातीफले पुमान्। स्वर्गे गन्धोत्पले क्लीवं सुगन्धिकान्तयोः स्त्रिष्विति मेदिनी। पुण्यं शोभन मेधेषु क्लीवं धर्म्मे च सुकृते इति मेदिनी। मधुरस्तु रसे त्रिषे मधुरं रसवृत्स्वादु पेयेषु मधुरोऽन्यवदिति विश्वः। कालियेनाधिष्ठितो ह्रदः कालियस्य ह्रदः इति वा षष्ठीसमासः। तथा च दशमे-कालिन्द्यां कालियस्यासीत् ह्रदः कश्चिद्वित्यादिः ॥२०॥

अनु०—श्रीकृष्णचन्द्र ने बारम्बार अपूर्व नृत्य-लीला-चातुरी का सानन्द प्रदर्शन कर अपने प्रबल-पौरुष द्वारा अभिमानी-कालिय-सर्प का दमन किया था उस समय सर्प के मस्तक से रक्त वर्ण-मणि गण गिरने के कारण यमुना का श्यामल-सलिल, रक्त-श्याम वर्ण हो उठा था अर्थात् स्वभावतः यमुना का श्यामल-सलिल, लाल-मणियों की आभा से मिल धूम्र वर्ण हो गया था। हे हंस! तुम यमुना तटवर्त्ती कदम्ब वृक्ष की केशर से सुरभित उस कालिय-ह्रद के मधुर जल को अवश्य पान करना ॥२०॥

[मुखोल्लास—दोहा

कालीदह जल पान करि, बाढ़ै ओज अपार।
हंस कियौ या हेतु मैं, तासु गुणन विस्तार ॥२०॥

मूल की भाषा पद्य [ कुंडलिया छन्द ]

पुनि पुनि क्रीड़ा नृत्य लखि उपज्यौ चित्त हुलास।
या हित काली कों भयौ अहंकार आभास॥
अहंकार आभास फणिन तें मणि गण निर्मल।
गिरे धूम्र सम भयौ तबै कालीदह कौ जल॥

कदम वृक्ष के कुसुम केशरनि सों सुरभित गुनि ।
पूर्व पुण्य तें मीठौ पानी पिओ सु पुनि पुनि ॥२०॥

सारांश-सोरठा

करि मीठो जल पान काज हमारौ करहुगे ।
तातें सपदि पयान हंस ! मधुपुरी कों करौ ॥२०॥

००००

तृणावर्त्तारातेर्विरहदवसन्तापिततनोः
सदाभीरीवृन्दप्रणयबहुमानोन्नतिविदः ।
प्रणेतव्यो नव्यस्तवकभरसम्वर्द्धितशुच-
स्त्वया वृन्दादेव्याः परमविनयाद्वन्दनविधिः ॥२१॥

टीका—तत्समीपे च वृन्दावनाधिष्ठात्री साक्षाद्वृन्दादेवी वर्त्तते, वृन्दावनसन्दर्शनफलसूमार्थं तस्या वन्दनं भवता कार्य्यमित्युपदिशति तृणावर्त्तेति । त्वया परमविनयात् वृन्दादेव्याः वन्दनविधिः प्रणेतव्य कर्त्तव्य इत्यर्थः । कीदृश्याः तृणावर्त्तारातेः श्रीकृष्णस्य यो विरहः स एव दावः वनाग्निः तेन सन्तापिता तनुर्यस्या एतेन भवद्गमनं तस्याप्युपकारकं यद्बहुमानं अतो देवकार्य्यार्थमपि भवता अवश्यं मधुपुरी गन्तव्येत्याशयः । पुनः कीदृश्याः सदा सर्व्वदा आभीरीवृन्दस्य गोपस्त्रीसमूहस्य प्रणयेन प्रेम्णा बहुबहुमानस्तस्य उन्नतिं वृद्धिं वेत्ति जानाति यद्वा प्रणयेन श्रीकृष्णकर्तृकं यद्बहुमानं सम्माननं तस्योन्नतिं वृद्धिं वेत्ति एतेन विरहविधुनानामस्माकं दर्शनेनापि तस्यास्ताप इत्युक्तम् । पुनः कीदृश्याः नव्यो नूतनो यस्तवकभारो गुच्छसमूहस्तेन सम्वर्द्धिता शुक् शोको यस्याः तद्दर्शनेन श्रीकृष्णस्मरणात् शोकः यद्वा आः श्रीकृष्णं विना वृथैवायं मदीयवनस्तवकसंभार इति शोकः । वने च वनवन्हौ च दवो दावः प्रकीर्त्तित इत्यमरः ॥२१॥

अनु०—श्रीकृष्णचन्द्र के विरहानल में जिसका शरीर संतप्त होगया है और जो गोपीगण के प्रेम निबन्धन, बहुमान एवं गर्व के कारण प्रेम की महिमा को जानने वाली है अथवा प्रणय एवं मान स्वरूप विरह के उत्कर्ष का ज्ञान रखती है तथा नवल-मञ्जरी उदय होने से जिसका शोक प्रदर्शित हो रहा है ( श्रीकृष्णचन्द्र मथुरापुरी पधारे हैं, हाय ! अब कौन उसके मञ्जरी-पुष्प-पत्रादि धारण करेगा ) इस प्रकार सेवा से वञ्चित हो जो अपने मनमें दुःखित हो रही है उस वृन्दा ( तुलसी ) देवी को तुम विनीत होकर प्रेम सहित अवश्य वन्दना करना ।।२१।।

भावरूप—दोहा

हंस ! मार्ग में देखियो औरहु रम्य स्थान ।
वृन्दा देवी के करहु दर्शन परम सुजान ।।२१।।

मूल की भाषा पद्य [ छन्द घनाक्षरी ]

तृणावर्त रिपु श्री कृष्ण महाराज विरह,
दावानल पाय जाकौ भयौ तातौ तन है ।
जानति है प्रीति और आदर की उन्नति सो,
जैसी नँद नन्द प्रति करी गोपी जन है ।।
नूतन प्रसूनन के गुच्छन की अधिकाइ,
देखत ही ताकौ अति दुखी होत मन है ।
ऐसी वृन्दादेवी ताहि बहु बिनती सों हंस !
नमस्कार करि के कौ कीजिये जतन है ।।२१।।

सारांश—सोरठा

वृन्दा देवी नाम जानति गोपी कृष्ण हित ।
ताकों करत प्रणाम हंस जाइ मथुरा पुरी ।।२१।।

इति क्रान्त्वा केकाकृतविरतिमेकादशवनीं
घनीभूतं चूतैर्व्रज मधुवनं द्वादशमिदम् ।
पुरी यस्मिन्नास्ते यदुकुलभुवां निर्म्मलयशो-
भराणां धाराभिर्धवलितधरित्रीपरिसरा ॥३२॥

टीका—अथ पुरप्रवेशमुपदिशति इतीति । इत्यनेन प्रकारेण एकादशवनीं क्रान्त्वा गत्वा इदं वक्ष्यमाणं द्वादशं द्वादशपूरणं मधुवनं व्रज याहि एतेन मधुवनस्यैव मथुरासंज्ञेति ज्ञायते । एकादशानां वनानां समाहारः एकादशवनी द्विगोरिति ई प्रत्ययः स्त्रियां, कीदृशीं केकाकृतविरतिं केका मयूरध्वनिः तया कृता उत्पादिता विशिष्टा रतिर्बारणं रमणं तस्यां यद्वा केकाभिः कृता विरति विरामो यत्र अयम्भावः तदानीं कृष्णदर्शन-मुरलिध्वनिभ्यां मेघागमनमाशङ्क्य सर्व्वदैव मयूराः ध्वनिमकुर्व्वन् । इदानीं तदभावात् केकानां विरामो यत्र, तथा च दशमे-गोविन्दवेणुमनुमत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्व-परताम्यसमस्तसत्वम् ॥ (१०-२१-१०) विरतिमिति उकारवत् पाठे केकाभिः कृतशब्दां, किं तदा मधुवनं तदाह यस्मिन् मधुवने यदुकुलभुवां यदुकुलोत्पन्नानां पुरी आस्ते, किम्भूतानां निर्म्मलयशोभराणां अनुपमोज्ज्वलयशोभराणां पुरी कीदृशी धाराभि-र्धवलितधरित्रीपरिसरा धाराभिः कान्तिप्रवाहैः धवलीकृतो धरित्रीपरिसरो यया, मधुवनं कीदृक् चूतैराम्रवृक्षैर्घनीभूतं निबिडतरम् । केका वाणी मयूरस्येत्यमरः । मधु दैत्येनाधिष्ठितं वनं मधुवनम् । धारा सैन्याग्रिम-स्कन्द-सन्तत्योः पतनान्तरे । द्रव-द्रव्य-प्रपाते च तुरङ्गगतिपञ्चमे । खड्गादीनाञ्च निशिते मुखे धारा प्रकीर्त्तिता इति विश्वः । अत्र धारापदेन द्रव-द्रव्य-प्रपातवत् अति बहुलकान्तिश्रेणी प्रतीयते । द्वादशमिति पूरणे दशान्ताड्ड इति डित्वादनो लुक् । धवलितमिति नाम निर्घ्नत्वात् कर्म्मणि क्तः ॥३२॥

अनु०—इस तरह तुम मयूरों की ध्वनि से मुखरित एकादश वनों

'वयमसि-विशाखकायदक्षा' इति गर्वं कवलयति ग्रासीकरोति दूरयतीति यावत् । तद्विशिष्टं यत् ऊरुयुगलं पशुपरमणीनां चित्तान्येव दुर्गमत्वात् करिणो तेषामालानशुभ्रस्य द्युतिं कान्तिं अवलम्बे प्राह, कीदृशां बलवतां करिणोऽपि तथा सर्वेन्द्रियाणामवशत्वात् बलवत्त्वात् चित्तस्य तथा चोक्तमेकादशे—"मनोवशेऽन्ये ह्यभवन् स्म देवा मनस्तु नान्यस्य वशं समेति" इति, "भीष्मो हि देवः सहसः सहीयानिति च" देवा इन्द्रियाणि देवो मनः, पुनः कीदृशानां मदात् मत्ततायाः हेतोः उद्दामानां छिन्नश्रृङ्खलानां दम्यतेऽनेनेति दामो रज्जुः अदन्तः, यद्वा दामोदरमलं भावे घञन्तादमलरहितानामित्यर्थः । चित्तपक्षे-दाम कुलाचारादिः, तथा च शान्तिशतके—'यदामो दुर्वारः भ्रमरति मदश्चित्तकरिणां, कुत' इत्यादौ श्लोके प्रमाणं द्रष्टव्यमिति । "आलानं बन्धनस्तम्भे करिणामित्यमरः" । "मदो विकारः सौभाग्य-यौवनाद्यवलेपज इति" साहित्यदर्पणः । "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः । मद्ये च मद्य आख्यातो मदो निकृष्टवस्तुनीति" विश्वः ॥२६॥

अनु०—श्रीकृष्णचन्द्र के उरु युगल की कान्ति छटा मरकत मणि निर्मित कदली वृक्षों का गर्व खर्व करती है जोकि श्रीकृष्णचन्द्र के प्रेम गर्व से उद्धत एवं बलवान् गोपीगण के चित्तरूप गजराज के बाँधने को 'बन्धन-स्तंभ' रूप हो रहा है ॥५६॥

प्राग्रूप-दोहा

मैं मराल तुम सों कहत, कछु निज मति अनुसार ।
जंघा श्री व्रजचन्द्र की, बरनि लहै को पार ॥५६॥

मूल की भाषा पद्य—छन्द रोला

हरि के विवि जंघन कौ ऐसौ रुचिर प्रकाश सुहायौ ।
खम्भ स्थूल कदलि मर्कत के तिन कौ गर्व मिटायौ ॥
निज मद तें बलवान गोप नारिन के जनु चित वारण ।
सो इन गज बन्धन खंभन सों बँधत कियें हित धारण ॥५६॥

सारांश—सोरठा

लगे जंघन माहिँ गोपीजन मन रहत हैं।
हेतु दूसरौ नाहिँ आश्रय थल तिन कौ यहै ॥५६॥

००००

सखे ! यस्याभीरीनयनशफरीजीवनविधौ
निदानं गाम्भीर्य्यप्रसरकलिता नाभिसरसी ।
यतः कल्पस्यादौ सनकजनकोत्पत्तिवडभी-
गभीरान्तःकक्षाधृतभुवनमम्भोरुहमभूत् ॥५७॥

टीका—नाभिं वर्णयति, हे सखे यस्य श्रीकृष्णस्य नाभिसरसी आभीरीनयनशफरीजीवनविधौ निदानं आदिकारणं, आभीरीणां नयनान्येव शफर्य्यः प्रोष्ठिकाः तासां प्राणधारण-विधानार्थ्याः, कीदृशी नाभिर्गाम्भीर्य्यस्य यः प्रसरस्तेन कलिता युक्तेति यावत् । तस्याः महत्त्वमाह यत इति यतो यस्यां नाभिसरस्यां कल्पस्यादौ प्रथमकल्पारम्भे अम्भोरुहं पद्मम‌भूत् । कीदृशं तत् सनकजनकेति सनकजनको ब्रह्मा तस्य उत्पत्तये वडभी चन्द्रशालिका रूपा या गभीरा अन्तःकक्षाः मध्यप्रदेशः तत्र धृतानि भुवनानि चतुर्द्दशलोको येन तत् । पाद्मकल्पे हि नारायणस्य नाभिपद्मे ब्रह्मा संभूयते तेनैव पद्मेन प्रलये तत्र लीनानसौ कालं कल्पयेदिति पौराणीकी वार्त्ता । तथा च तृतीये—'अनेन लोकान् प्राग्लीनान् कल्पयितास्मीत्यचिन्तयेदिति' । सनकजनकपदेन सनकस्य सर्व्वज्येष्ठत्वात् तस्य जनकतया सर्व्वकारणत्वं ब्रह्मणा उक्तम् । एतस्याप्युत्पत्तिहेतुत्वात् आदिकारणत्वमुक्तं श्रीकृष्णस्य । तथा च दशमे-"यन्नाभिजातादरविन्दकोषाद् ब्रह्माविरासीद् यत एष लोकः"इति । अन्तःकक्षापदेन भुवनानामेकत्र कुत्रापि स्थितत्वात् तस्या अपरिच्छेद्यतोक्ता । "नाभिः मुख्यनृपे क्षेत्रे चक्रान्तरचक्रवर्त्तिनोः । नाभिः प्रधाने कस्तूरीमदे चक्रा-

दिकेऽपि च" इति विश्वः। "वडभी चन्द्रशालिका इति कोषान्तरम्" चान्द्रलोति ख्याता ॥५७॥

अनु०—हे सखे ! श्रीकृष्णचन्द्र का गम्भीरता युक्त नाभि सरोवर गोपीगण के नयन-रूप चंचल मछलियों के प्राण-रक्षण का एक मात्र जीवनोपाय है। कल्प के आदि काल में जिसमें से एक कमल उत्पन्न हुआ था, जिसके गम्भीर गर्भ-गृह में तीनों भुवन विराजमान हैं और वही कमल, ब्रह्माजी की उत्पत्ति का आधार भूत, काष्ठ-स्वरूप है। जैसे किसी गृह को धारण करने के लिए निम्न भाग में थूनी लगाते है, उसी प्रकार वह कमल ब्रह्मा के गृह का काष्ठ स्वरूप है ॥५७॥

भावरूप-दोहा

हे मराल परसा परम, कहत नाभि गम्भीर।
है सचेत सुनिये सखे, शुचि स्वभाव मति धीर ॥५७॥

मूल की भाषा पद्य—छन्द घनाक्षरी

गोपिन के नैन रूप मीनन कौ जीवन जो,
ललित गँभीरता कौ पूरन प्रसर है।
कल्प के आदि माहिँ सनक मुनिजी के पिता,
ब्रह्माजी की उत्पत्ति कौ जानौ जाहि घर है॥
ताके अति भीतर की कक्षा तें प्रकट भयौ,
लोकन अधार कंज भव्य दिव्य तर है।
एहो सखे हंस ! ता कौ लीजिये दरस जाय,
ऐसौ कृष्णचन्द्र जी कौ नाभि सरोवर है॥५७॥

सारांश—सोरठा

आदिहि तें विख्यात कृष्ण नाभि महिमा रही।
भाव यहै दरसात ललिता जी के कथन कौ॥५७॥

०००० 

द्युतिं धत्ते यस्य त्रिवलिलतिका सङ्कटतरं
सखे ! दामश्रेणीक्षणपरिचयाऽभिज्ञमुदरम् ।
यशोदा यस्यान्तः सुरनरभुजङ्गैः परिवृतं
मुखद्वारा बारद्वयमवलुलोके त्रिभुवनम् ॥४८॥

टीका—उदरं वर्णयति द्युतिमित्यादि । हे सखे ! यस्योदरं द्युतिं शोभां धत्ते, कीदृशं त्रिवलिरेव लतिका वृतिकोषान्तरं सङ्कटतरं त्रिवलिरेव लतिका तया सङ्कटतरं संवाधं, पुनः कीदृशं दामश्रेणीति दामश्रेण्या यशोदयोपनीतरज्जुश्रेण्या क्षणं यः परिचयः संश्लेषरूपस्तयाभिज्ञम् । हैयङ्गवचौर्य्ये यशोदया उदूखले बद्धत्वात् श्रेणी-शब्दो दाम्नां बाहुल्य-सूचनाय, तथा च दशमे-'एवं स्वगृहदामानि यशोदा संदधत्यपीत्यादि' । तत्राश्चर्य्यमाह-यशोदेति यशोदा नन्दपत्नी यस्योदरस्याभ्यन्तरे मुख-द्वारा मुखमेव द्वारा तया बारद्वयं स्तनदानसमये मृद्भक्षणे योगे सति च बारद्वयं यथा स्यात्तथा त्रिभुवनं दृष्टवती । कीदृशं सुराः देवाः नराः मनुष्याः भुजङ्गाः सर्पास्तैः परिवृतं सङ्कुलमिति यावत् । एतेन स्वर्गम-र्त्यपातालानीति ज्ञेयम् । मुख्यत्वात् सुरेत्याद्युक्तम् । अन्यदपि तत्तन्निवासी ज्ञातव्यम् । एतदुपलक्षणम् । पृथिव्याद्यष्टावरणस्य दृष्टत्वात् । "द्युतिः श्री रश्मिशोभयोरिति मेदिनी" । "सङ्कटं नातृसंरोध इत्यमरः"। सङ्क-टशब्दो दन्त्यादि संप्रोदश्च कटच् इति कटच् प्रत्ययान्तः । रायमुकुटेन च-सम्यक् कटत्यावृणोति इति वाक्यं दर्शितम् । एवञ्च पुरुषोत्तमदेव-कृत-नकारभेदे शंकट-कट-शश इति तालव्यादि शङ्कटशब्दः कृदन्तत्वा-दीति समञ्जसम्, "लुकि दर्शने धातुः" ॥४८॥

अनु०—इस श्लोक में श्रीकृष्ण का दामबन्धन, मृद्भक्षण तथा जृंभण तीन लीलाओं का वर्णन है—हे सखे ! श्रीकृष्णचन्द्र का उदर माता यशोदा द्वारा बन्धनार्थ लाई हुई रज्जुओं का क्षणमात्र संगम लाभ करने से त्रिवली युक्त होकर अपूर्व कान्ति धारण कर

चुका था अर्थात् इस रज्जू द्वारा श्रीकृष्णचन्द्र की अपूर्व शोभा प्रगट हुई थी। सुन्दर वस्तु में कुछ भी असुन्दर नहीं होता। यशोदाजी ने श्रीकृष्ण के जँभाई लेते समय मुख फैलाने पर उनके मुख में नर, नाग, गन्धर्व आदि त्रिलोकी अर्थात् विश्व ब्रह्माण्ड का दर्शन किया तथा मृद्भक्षण करने पर "व्यादेहीति विदारिते शिशु मुखे दृष्ट्वा समस्तं जगद्" इस तरह वे दो बार विश्व का दर्शन कर चुकी हैं। ऐसे ऐश्वर्य की स्फुरणा ब्रज सुन्दरीगण के हृदय में विरह के समय ही हो सकती है ॥५८॥

प्रागरूपदोहा

हे मराल कहि सकत को, शोभा उदर अमन्द।
मातु यशोदा नैं लह्यौ, जो लखि परमानन्द ॥५८॥

मूल की भाषा पद्य–छन्द घनाक्षरी

एहो सितकंठ सखे! धारण कियौ है जानें,
अद्भुत अनूपरूप सुखमा सुघर कौ।
जापै विराजमान त्रिवली लता समान,
मातु डोरी बंधन में ज्ञानबान कर कौ॥
बाल लीला माहिँ जसुधा द्वै बार लख्यौ,
तीनों लोक जाल नर नागन अमर कौ।
प्रेम पुंज भक्तन कों आठौ जाम शुभ है जो,
सुभग ललाम सो उदर दामोदर कौ ॥५८॥

सारांश–सोरठा

माता बंधन काल डोरी श्रीहरि के उदर।
सह सुर नर अरु व्याल लखी त्रिलोकी कान्ह मुख ॥५८॥

००००

उरो यस्य स्फारं स्फुरति वनमालावलयितं
वितन्वानं तन्वी-जन-मनसि सद्यो मनसिजम् ।
मरीचीभिर्यस्मिन् रविनिवहतुल्योऽपि वहते
सदा खद्योताभां भुवनमधुरः कौस्तुभमणिः ॥५६॥

टीका—वक्षो वर्णयति उरो यस्येति । यस्योरो वक्षः स्फुरति शोभते । कीदृशं स्फारं विस्तीर्णं, पुनः कीदृशं वनेति-वनमालया वलयितं वेष्टितं, किं कुर्वत् तन्वीजनानां युवतीनां मनसि सद्यो दर्शनमात्रेण मनसिजं कन्दर्पं वितन्वानं विस्तारयत् । तेजो बाहुल्यं दर्शयति-यस्मिन्नुरसि मरीचिभिः कान्तिप्रवाहैः रविनिवहतुल्योऽनेकसूर्य्यतुल्योऽपि कौस्तुभमणिः सदा खद्योताभां ज्योतिरिङ्गणतुल्यतां वहते धारयति । अतिनिबिडघनश्यामकान्तीनां प्रकर्षेण तिरस्कृतत्वात् खद्योतसादृश्यम् । स कीदृक् भुवनमधुरः भुवनेषु सुन्दरः । "मरीचिमपि भेदो नागम स्तारया पुंसकर्मिति" । 'स्फारः स्यात् पुंसि विकटे कारकादेश्च बुद्बुदे इति च' । "विकटं विस्तीर्णं खद्योतो ज्योतिरिङ्गण" इत्यमरः । मधुर उक्तः ॥५६॥

अनु०—श्रीकृष्णचन्द्र जी का विशाल वक्षस्थल वनमाला द्वारा विभूषित एवं दीप्तिमान् है जिसका दर्शन करने मात्र से कृशाङ्गी सुकुमारी सुन्दरियों के हृदय में अप्राकृतिक काम का उद्गम होता है अर्थात् अन्य वस्तुओं की आसक्ति त्याग कर प्रेमवती नारीगण का उसी में अनुराग बढ़ता है । वनमाला की किरणों द्वारा सहस्र सूर्यों के समान कान्तिमयी, त्रैलोक्य-मनोहर कौस्तुभ मणि भी उसी वक्षस्थल पर खद्योत की तरह हत-प्रभ सी होकर विराजमान है ॥५६॥

भावरूप-दोहा

वक्षस्थल छवि कृष्ण की, भक्तन कों सुख धाम ।
हंस ! जाहि लखि लजत हैं,सजल जलद अति श्याम॥५६॥

मूल की भाषा पद्य-घनाक्षरी

अति विस्तार सों विशाल वनमाल सहित,
राजत रसाल शोभा सूचक ललाम कौ।
दामिनी उद्योत कामिनीन के हरत मन,
दरशन ही तें उपजायक है काम कौ॥
कौस्तुभ मणि तेज में रवि समुदाय सम,
भुवन निकाय हेतु छवि अभिराम कौ।
ताकी हू दमक तहां जुगनू चमक जैसी,
ऐसी नील कान्तियुत वक्षस्थल श्याम कौ॥५६

सारांश-सोरठा

वक्षस्थल ब्रजचन्द कौस्तुभ-मणि वनमाल युत।
लोकन कों सुखकन्द ताकौं हंस निहारिये॥५६॥

००००

समन्ताहुन्मीलद्वलभिदुपलस्तम्भयुगल-
प्रभाजैत्रं केशिद्विजलुलितकेयूरललितम्।
स्मरक्लाम्यद्गोपीपटलहठकण्ठग्रहपरं
भुजद्वन्द्वं यस्य स्फुटसुरभिगन्धं विजयते॥६०॥

टीका—बाहू वर्णयति समन्तादिति। यस्य भुजद्वन्द्वं विजयते सर्व्वोत्कर्षेण वर्त्तते। कीदृशं समन्तात् सर्व्वतः उन्मीलन्ति प्रकाशमाना यः वलभिदुपलस्तम्भयुगलस्य इन्द्रनीलमणि-पाषाण-घटितस्तम्भसमूहस्य प्रभा कान्तिस्तस्या जैत्रं जयशीलं, पुनः कीदृशं केशीति केशि नाम्नः हयाकृतिदैत्यस्य द्विजाः दन्तास्तै लुलिते पदे भीते ये केयूरे ताभ्यां ललितं अतिमनोहरं, पुनः कीदृक् स्मरेति-स्मरेण क्लाम्यन्तीनां ग्लपितानां पटलस्य समूहस्य हठेन बलात् यः कण्ठग्रहः कण्ठग्रहणं तत्र परं

ज्याघ्रातं, पुनः कीदृक् स्फुटेति-स्फुटो व्यक्तो अतिप्रकटः सुरभिः घ्राणतर्पणो गन्धो यस्य तत्, समन्तादित्यव्ययम्। "दन्त विप्राण्डजा द्विजा" इत्यमरः। "हठो विप्रतिपत्त्यां स्याद् प्रसभेऽपि चेति" विश्वः। "अथ पटलं सगृहे परिवारे परिच्छेदे। छदि व्यओम्रतिलके क्लीवं वन्दे पुनर्न ना इति"। सुरभिर्घ्राणेन्द्रियतृप्त-कारको गन्धः। तथा चामरः। "सुरभि घ्राणतर्पणः" इति ॥६०॥

अनु०—जिन श्रीकृष्णचन्द्र की प्रकाशवान् इन्द्रनीलमणि के स्तंभों के समान दोनों भुजाएँ जिनमें केयूर (बाजूबन्द) शोभा पा रहे हैं और जो केशी दानव के दशनों द्वारा दष्ट हो चुकी हैं, जिनको आलिंगन तथा कण्ठ में धारण करने के लिए काम-पीड़ित व्रजांगना गण सदा उत्कण्ठित एवं तत्पर रहती हैं, वे मधुर सुगन्धि युक्त विराजमान हैं ॥६०॥

प्राग्रूप—दोहा

भव्य भुजा श्रीकृष्ण की, सोहत सुखमा मूल।
रहत हंस! जो सर्वदा, भक्तन पर अनुकूल ॥६०॥

मूल की भाषा पद्य—छन्द गीतिका

रोचक प्रकट शुचि गंधयुत सब सो शिरोमणि आगरी।
सब ओर तें दीप्त सों शुभ नील मणिन उजागरी॥
जिन तें बने युग खम्भ तिनकी कान्ति जीतनहार जो।
केयूर केशीदन्त मर्दित बलित छवि निर्वार सो॥
अति काम पीड़ित गोपललना सदन सुखमा साज की।
तिन की भईं सो कंठ भूषण भुजा दोउ व्रजराज की॥

सारांश—सोरठा

भूषित रस शृङ्गार लसत वीरता सहित जे।
महिमा अमित अपार भुज बिशाल श्रीकृष्ण की ॥६०॥

००००

जिहीते साम्राज्यं जगति नवलावण्यलहरी-
परीपाकस्यान्तर्मुदितमदनावेशमधुरम् ।
नटद्भ्रूवल्लीकं स्मितनवसुधाकेलिसदनं
स्फुरन्मुक्तापंक्तिप्रतिमरदनं यस्य वदनम् ॥६१॥

टीका—श्रीमुखं वर्णयति-यस्य वदनं जगति नव लावण्यलहरी-परिपाकस्य साम्राज्यत्वात् अति-मनोहरा या लावण्यलहरी लावण्यतरङ्गस्तस्याः परिपाकः परिपूर्णता तस्याः साम्राज्यं आधिपत्यं जिहीते अधितिष्ठति प्रतिक्षण-नूतनास्नीयलावण्यराशिसमग्रत्वश्रेष्ठं प्राप्नोतीत्यर्थः । ततः सर्वलावण्यस्य नीचत्वात् । कीदृशं अन्तरिति अन्तर्मध्य अन्तरे मुदितस्य मदनस्य च आवेशः समस्तेन मधुरमतिमनोहरं अतिशय सौन्दर्य-लाभात् मदनस्य मुदितत्वम्, पुनः कीदृशं नटन्ती लीलापरत्वात् नृत्यन्तीव भ्रूवल्लीलता यत्र, बहुव्रीहौ कः, पुनः कीदृक् स्मितेति स्मितनवेऽति-सन्देशकुशलमेव सुधा अतिमनोहरकत्वात् अमृतं तस्या केलिसदनं लीलामन्दिरं तमेव, तत्र स्मितसुधायाः विद्यमानत्वात्, यद्वा स्मितनव-सुधा च केलिकरिणा मदिरायाः सदनम्,क्वचिद्व्यभिचारात् केलिशब्दस्य सम्बन्धेन प्राग्भावः । पुनः कीदृशं स्फुरदिति-शोभमाना या मुक्ताप-ङ्क्तिस्तत् प्रतिमस्तुल्या रदना दन्ता यत्र तत् । "जिहीते इति ओहाङ्गतौ ह्रादिः" । "लावण्यं कमनीयता" । "रदना दशना-दन्ताः" इत्यमरः ।'लीलां विदुः केलि-विलास-हास-शृङ्गारभाव-प्रभव-क्रियास्विति' विश्वः ॥६१॥

अनु०—जो नव-लावण्य-लहरियों के परिपाक स्वरूप अन्तः प्रमोद से विकसित एवं मदनावेश से मनोहर है जिसमें चंचल भ्रकुटि-लता नृत्य करती रहती है और जो नवल-हास्य, सुधा-केलि का विलास-सदन है, जिसमें प्रकाशमयी मुक्तावलि के समान दन्त पंक्ति सुशोभित है ऐसा श्रीकृष्णचन्द्र का मुखारविन्द विराजमान है ॥६१॥

आशय-दोहा

दर्शनीय मुख कृष्ण कौ, सो निहारिये हंस !
लोचन निज कीजै सफल, सुनिये खग अवतंस ॥६१॥

मूल की भाषा पद्य-छप्पय

शोभा लहर त्रिलोकी की अद्भुत सुघराई।
नव सुन्दरता विभव कान्ति आनन पर आई॥
मदन हर्ष अन्तर कौ दरसत सुधा केलि घर।
रुचिर मन्द मुसकानि चपल भ्रूलता मनोहर॥
शुचि दाँत पाँति मोतीन की सरल लड़ी शुभ साज की।
जन प्रेमपुंज मन मोदकर मुख छवि श्री ब्रजराज की ॥६१॥

सारांश-सोरठा

भौंह लता सुख दानि राजत मुख श्रीकृष्ण पर।
सुधा मन्द मुसकानि दाँत पाँति मोतीन सम ॥६१॥

००००

किमेभिर्व्याहारैः कलय कथयामि स्फुटमहं
सखे निःसन्देहं परिचयपदं केवलमिदम्।
परानन्दो यस्मिन्नयनपदवीभाजि भविता
त्वया विज्ञातव्यो मधुरस्व ! सोऽयं मधुरिपुः॥६२॥

टीका—इदानीं "पादादियावद्धसितं गदाभृत" इति कपिलोक्तक्रमेण मुखपर्य्यन्तं विवरण परानन्दो तदत्र परमं चिन्हमिति वदन्नीत्युपसंहरति किमेभिरिति। हे सखे एभिर्व्याहारैः क्रमपरिचयकथाभिः किं, न किञ्चिदित्यर्थः। निःसन्देहं यथा स्यात् स्फुटं व्यक्तं इदं परिचयपदं परिचयस्य चिन्हं कथयामि शृणु, केवलं अव्यभिचारिकं तदित्याह-यस्मिन्निति यस्मिन् जने नयनपदवीभाजि सति परानन्दो भविता, हे मधुरस्व ! हे

सत्तुरभ्वान ! सोऽयं मधुरिपुः श्रीकृष्ण इति त्वया ज्ञातव्यः, इति शब्द-स्याध्याहारः । पदवी-शब्दोपादानेन आस्तां तावदखिलाङ्गस्य लावण्या-नुभववार्त्ता चक्षुः गोचर एव परमानन्दप्रकाशो भवतीति ध्वनितम् । "व्याहार उक्ति र्लपितमित्यमरः" । "पदं शब्दे च वाक्ये च व्यवसा-योपदेशयोः । पादस्तच्चिन्हयोः स्थानत्राणयोः वस्तुवस्तुनोरिति" मेदिनी । "केवलः कुहने पुमान् नपुंसकस्तु निर्णीते । वाच्यवाचककृत्स्नयोरिति" च । परा-शब्दोपादानात्तस्य चाह्लादानन्दत्ता ध्वनिता ॥६२॥

अनु०—हे मधुरभाषी, मधुर शब्दकारी सखे ! अब मुझको तुमसे विशेष कथन की आवश्यकता नहीं है, सुनो, मैं जिससे स्पष्टरूपेण श्रीकृष्णचन्द्र पहचाने जा सकें ऐसा चिह्न बतलाती हूँ । जिसके दर्शन मात्र से तुम्हारे हृदय में आनन्द का उद्रेक हो जावे उन्हे तुम जान लेना कि ये ही श्रीकृष्णचन्द्र हैं । इस श्लोक से श्रीकृ-ष्ण का आनन्द-घन-विग्रह होना ध्वनित होता है । श्रुति में कहा है:—'रसो वै सः, रसं ह्येवाऽयं लब्ध्वा आनन्दी भवति ।' उसी अभिप्राय से भगवान् बादरायण ने कहा है—'आनन्द मयो ऽभ्यासात्' श्रीमद्भागवत् में—'आनन्दमूर्त्तिमुपगुह्य' ऐसा कहा है और ब्रह्म-संहिता में भी 'सच्चिदानन्द विग्रहः' ऐसा कहा है । महाभारत में श्रीकृष्ण शब्द की निरुक्तिः—'कृषिर्भू वाचकः शब्दः णस्तु निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।' ऐसा कहा है ॥६२॥

भाषारूप—दोहा

ललिता बरनत हंस सों, प्रकट चिह्न हरि रूप ।
पहले जो बर्णन किये, तिन तें पृथक अनूप ॥६२॥

मूल की भाषा पद्य—छन्द रोवै

हे प्रिय हंस मधुर स्वर ! मैंने जो ये अङ्ग गनाये ।
इनको कहा कथन सुनिये अब कहत चिह्न प्रगटाये ॥

जा पुरुषहि निरखत दृग पावहि परमानन्द तुम्हारे।
आनन योग्य तुमहिं सोई मधुसूदन नन्द दुलारे॥६२॥

सारांश—सोरठा

होय परम आनन्द जिन के दर्शन मात्र सों।
भक्त जनन सुख कन्द कृष्णचन्द्र सो जानिये॥६२॥

०००

विलोकेथाः कृष्णं मदकलमरालीरतिकला—
विदग्ध व्यामुग्धं यदि पुरवधूविभ्रमभरैः।
तदा नास्मान्ग्राम्याः श्रवणपदवीं तस्य गमयेः
सुधापूर्णं चेतः कथमपि न तक्रं मृगयते॥६३॥

टीका—अनवसरे कथनं निषेधति विलोकेथा इति। हे मदकलमराली-रतिकलाविदग्ध! मदेन मत्ततया कलरवासक्ता या मराली हंसी तस्या रतिकलासु विदग्ध पण्डित! एतेन हंसस्यापि उत्तमनायिकारतिविदग्धत्वात् भवानपि सर्वं वेत्तीत्युक्तम्। यदि पुरवधूविभ्रमभरैः मथुरा-स्त्रीणां विलासभरैः व्यामुग्धं आक्षिप्तचित्तं कृष्णं विलोकेथाः द्रक्ष्यसि तदा अस्मान् गोपीः तस्य, रतिकलासु विदग्ध! पण्डित! एतेन हंस-स्यापि। श्रवणपदवीं न गमयेः कर्णपथं न प्रापयेः! नास्मान् कथयि-ष्यतीति भावः। तत्र हेतुः अस्मान् कीदृशीः यतो ग्राम्या ग्राम्यत्वात् लीलाविलासचातुर्याभाव उक्तः। अर्थान्तरोपन्यासमाह-सुधापूर्णं अमृतेन पूर्णं चेतः कथमपि कदाचिदपि तक्रं न मृगयति न वाञ्छतीत्यर्थः। तत्र नागरस्त्रीविभ्रमाक्षिप्तचेतसः श्रीकृष्णस्य ग्राम्याणां गोपीनां कथा स्वादाय न भविष्यतीति प्रस्तुतस्य तत् साधनायास्योपन्यासादर्थान्तरो न्यासोऽयम्। तथा च दण्डी—"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन। तत् साधनसमर्थस्य न्यासो योऽन्यस्तु वस्तुन" इति। तथा च भरतः—"बाहुमूलं स्तनं नाभीमुरुमूलञ्च मेखलाम्। व्याजतो

दर्शयेत् यत्र रसोऽसौ विभ्रमो मतः” इति । क्वासुग्धपदोपादानेन सुरतसूचकानामेवोपस्थानात् विभ्रमस्तु सुरतसूचक एव । तथा चोक्तं– “नीवीमोचनबद्धो मुहुमुहु जृम्भा च संश्लेषः । स्वाधरदानग्रहणं वालकपरिचुम्बनं रतोत्सुकेति” । “अपि सम्भावना-प्रश्न-शङ्का-गर्हा-समुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु चेति” विश्वः ॥६३॥

अनु०—हे रसिक ! तुम मदमत्त मरालियों के साथ विलास में रसिक हो अतएव रसानुकूल आचरण विज्ञान में भी निपुण हो इस कारण यदि तुम श्रीकृष्णचन्द्र को मथुरा नगर की सुन्दरियों के विलास में आसक्त पावो तो हम अरसिका, वन–वासिनियो की कथा उनके सन्मुख प्रगट मत करना, कारण कि ऐसा करने से उनके विलासानन्द में विघ्न पहोंचेगा क्योंकि जो लोग अमृत पान करते हैं वे छाछ को क्यों खोजने लगे ? अर्थात् श्रेष्ठ वस्तु पाने पर निकृष्ट का कौन आदर करता है। मथुरापुरी की रसिक सुन्दरियों को पाकर अब श्रीकृष्ण हम वनवासिनियों की याद भूल गए हैं ॥६३॥

भागरूप–दोहा

फिर फिर तुम सों कहत हौं, करौ हंस ! निर्धार।
समाचार यह कृष्ण सों; कहियो समय विचार ॥६३॥

मूल की भाषा पद्य-छन्द गीतिका

हे मत्त हंसी रमण में अति चतुर हंस ! सँदेश ये।
कहिये न सहसा कृष्ण सों धरि धीर अवसर देखिये ॥
पुर बधुन हास विलास तत्पद होंहि गहिये मौन कों।
कोउ छक्यौ अमृत सों न खोजत चूक रुचि शुचि हीन कों॥६३

सारांश–सोरठा

जानिय हंस सुजान ! अभिप्राय मम कथन कौ।
सन्मुख पुर अबलान कहियो जिन सन्देश यह ॥६३॥

oooo

यदा वृन्दारण्यस्मरणलहरीहेतुरमलं
पिकानां वेवेष्टि प्रतिहरितमुच्चैः कुहुरितम् ।
वहन्ते वा वाताः स्फुरितगिरिमल्लीपरिमला-
स्तदैवास्माकीनां गिरमुपहरेथाः मुरभिदे ॥६४॥

टीका—कथनावसरमाह यदिति । यदा पिकानां कोकिलानां उच्चैः कुहुरुतं कुहुरिति ध्वनिः प्रतिहरितं दिशि दिशि वेवेष्टि व्याप्नोति, कीदृशं वृन्दारण्यस्मरणलहरी प्रतिशयस्मरणं स्मरणस्य धारावाहित्वसूचनाय लहरीशब्दोपन्यासः । पूर्व्वानुभूतत्वात्तस्या हेतुः, पुनः कीदृक् अमलं रसोर्जितत्वात् पञ्चमत्वाच्च । तथा चोक्तं-"पुष्पस्य धारणे काले पञ्चमं रौति कोकिल" इति । यदा वाता वहन्ते वाताः कीदृशाः स्फुरितेति स्फुरिता या गिरिमल्ल्यः कुटजपुष्पाणि ताभिः परिमलः सुरभिगन्धो येषु ते । अन्येष्वपि पुष्पेषु सत्सु वृन्दावनेऽतिशयानुभूतवनपुष्पत्वात् वनस्य वा पादानां अयमपि वृन्दावनस्मरणहेतुः । तदा आस्माकीनां अस्मत् सम्बन्धीनां गिरं मुरभिदे श्रीकृष्णाय उपहरेथाः । उपढौकिनीं कुर्य्या इति पूर्व्वोक्तश्लोकानां सम्बन्धः ॥६४॥

अनु०—जब वृन्दावन की स्मृति उदय होने का कारण स्वरूप मथुरा नगरी में जब कोकिल का कुहूरव कर्णगत होगा एवं विकसित-मल्लिका-सुरभित-पवन प्रवाहित होगा इन सब कारणों से जब उनके हृदय में वृन्दावन की स्मृति जाग्रत हो उठे उस समय हे हंस ! तुम हमारे सन्देश को श्रीकृष्णचन्द्र के निकट निवेदन करना अर्थात् अन्य समय वे हमें क्यों स्मरण करने लगे; किन्तु जब कुहूरव, सुरभित-पवन जो कि वृन्दावन की विशिष्ट सम्पत्ति है, वह उस स्थान पर यदि सम्भव हो सकेगी तो कहीं श्रीकृष्ण के हृदय में ब्रजस्थली की स्मृति जाग्रत हो सकती है। ऐसी दशा में शायद उनको हमारी याद अवश्य आवेगी ॥६४॥

प्रागुक्त दोहा

हंस ! हमारो हित धरें, निज चित परम उदार।
यह सँदेश श्रीकृष्ण सों, कहियों समय विचार ॥६४॥

मूल की भाषा पद्य—छन्द गीतिका

कुहु कुहु करें कोकिल विमल सब दिशन ऊँचे सुरव लहैं।
अथवा प्रकाशित-पवन गिरमल्लीन की परिमल बहैं॥
तब होय वृन्दा विपिन की सुधि कृष्ण के चित आय के।
मुरमथन सों कहियो सँदेसो समय ऐसो पाय के॥६४॥

सारांश—सोरठा

कोकिल मधुर अलाप करें बहैं सुरभित पवन।
करै काम जग दाप तब सँदेस हरि सों कहौ॥६४॥

००००

पुरा तिष्ठन् गोष्ठे निखिलरमणीभ्यः प्रियतया
भवान् यस्यां गोपीरमण विदधे गौरवभरम्।
सखी तस्या विज्ञापयति ललिता धीरललित
प्रणम्य श्रीपादाम्बुजकनकपीठीपरिसरे ॥६५॥

टीका—अथ राधाया विरहावस्थां कथितुं प्रथमं तावदात्मनः प्रणाम-वक्तुमुपदिशति। हे धीरललित! श्रीकृष्ण! तस्या राधायाः सखी ललिता नाम्नी श्रीपादाम्बुजकनकपीठीपरिसरे श्रीपादाम्बुजयोः या कन-कपीठीका तस्याः परिसरे प्रान्तदेशे सभयतया समीपे गमनाभावात् प्रणम्य विज्ञापयति वक्ष्यमाणानीति शेषः। ननु राधिका इति चेत् तत्राहपुरेति। पुरा पूर्व्वं गोष्ठे व्रजे तिष्ठन् हे गोपीरमण! स्वातन्त्र्येणा-त्मवल्लभतां द्योतयितुं सम्बोधयति। किञ्च आत्मकान्तापरित्यागे दोष-

बाहुल्यं वैदुग्ध्यञ्च सूचितम् । निखिलरमणीभ्य अपेक्ष्येति "यजमर्यादित्वात्" पञ्चमी । यद्वा "बहुवचनात् क्वचित् पञ्चमी चेति" निर्द्धारणार्थं पञ्चमी । गोपीनां मध्य इत्यर्थः । यस्यां राधायां भवान् गौरवभरं गौरवातिशयं विदधे कृतवान् । धीरललित यथा—"निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यादिति" । अस्मात् विहाय निश्चिन्तत्वात् सतत-कलापरत्वाच्च धीरललितत्वम् । चतुर्विधाः नायकाः भवन्ति । धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च । धीरप्रशान्त इति तत्रायं धीरललित इति ॥६२॥

अनु०—हे धीरललित, हे गोपीजन रमण ! क्या उन गोपियों को आप भूल गए ? आप तो चिरकाल से ही प्रेमिकाओं के प्रेम के वशीभूत हैं । प्रथम ब्रजवास के समय, गोपीगण में से जिसके साथ आपका प्रेम अधिक था और जिसे 'प्रियतमा' कहकर विशेष सम्मान प्रदान किया था, उसी राधा की सखी यह ललिता आप के श्रीचरणों के कनक-मण्डित पाद-पीठ के निकट प्रणाम करती हुई यह निवेदन करती है ॥६५॥

भावरूप–दोहा

ललिता हरि सौं मिलन कौ, हंसहि समय बताय ।
अपनी सुधि करवावती, पिछली कथा सुनाय ॥६५॥

मूल की भाषा पद्य–छप्पय

हे गोपीजन रमण ! आप जब हे ब्रज माहीं ।
राधा सों जो हित हो, आनि तियन सन नाहीं ॥
धीर ललित ! सब भांति तासों सुख मान्यौ ।
तासु सखी मैं ललिता यह निज नाम बखान्यौ ॥
चरण कमल मृदु आप के जा कंचन चौकी पै लसैं ।
ता निकट निवेदन करत मैं, करि प्रणाम हित उर बसैं ॥६५॥

सारांश-सोरठा

पिछली सुधि करवाय ललिता अपनौ नाम कहि।
करि प्रणाम शिर नाय करत प्रार्थना कृष्ण प्रति ॥६५॥

०००००

प्रयत्नादाबाल्यं नवकमलिनीपल्लवकुलै-
स्त्वया भूयो यस्याः कृतमहह सम्वर्द्धनमभूत्।
चिरादूधोभारस्फुरणगरिमाक्रान्तजघना
बभूव प्रष्ठौही मुरमथन सेयं कपिलिका ॥६६॥

टीका—प्रथमं तावन्निजावस्थाकथने धाष्टर्यमाशङ्क्य श्रीकृष्णेन प्रयत्नाद्वर्द्धितानां गवादीनामवस्थामाह प्रयत्नादिति। हे मुरमथन! सेयं कपिलिका कपिला नाम्नी प्रष्ठौहीवाद् गर्भिणी बभूव। बाला चासौ गर्भिणी चेति कर्मधारयः। प्रथमगर्भयुक्तेत्यर्थः। कीदृशी चिरात् चिरकालं व्याप्य ऊधोभारस्य आपीनमारभ्य यत् स्फुरणं स्फुरितत्वं तस्य गरिमा गुरुत्वं तेन आक्रान्ते श्रमान्विते जघने यस्याः, तस्यायत्नातिशयं कथयन्ती तद्दर्शनार्थमागमनमुचितमित्यभिप्रेत्याह-प्रयत्नादिति आरभ्यं बाल्यमभिव्याप्य नवकमलिनीपल्लवकुलैः नूतनपद्मपत्रसमूहैः त्वया भूयः प्रचुरं यथा स्यात्तथा यस्याः कपिलायाः सम्वर्द्धनं स्नेहेनानुकूलनं कृतमभूत्। अहह इति एतादृशीमपि प्राणपार्श्वे विस्मृत्यतरांस्तत्र तिष्ठतीति खेदः। "अहहेत्यद्भुते खेदे" इत्यमरः। "प्रष्ठौही बालगर्भिणीति च"॥६६॥

अनु०—अब व्रजवास की अतीत स्मृति को उद्दीपित करती हुई श्रीललिता हंस को यह सन्देश सुनाने का आदेश करती है—'हे कृष्ण! बाल्य काल से ही आप जिस कपिला गौ को नूतन कमल पत्रों से लालन पालन किया करते थे, उस प्रथम गर्भिणी कपिला का स्तन वृद्धि के कारण जघन-देश अति भाराक्रान्त हो

है, इस कारण एक बार आप यहां आकर उसकी अ
ना का निरीक्षण तो कर जाओ यही श्रीललिता के वचन
प्राय एवं इनकी अभिलाषा है ॥६६॥

प्रागूरूप—दोहा

पुनि मराल सों करत है, ललिता यह संकेत।
कृष्णाचन्द्र सों जाय के, कहिये विनय समेत ॥६३॥

मूल की भाषा पद्य—छन्द दोवै

कपिल वर्ण बछिया बहु जतननि बालकाल तें पाली।
प्रति दिन रहे चुगावत ताकों नूतन पात मृनाली॥
सो अब भई गर्भिणी, अतिशय जंघा ताकी भारी।
होत खेद चलिवे में वाकों लखिये आय मुरारी ॥६६

सारांश—सोरठा

ब्याहैगी तत्काल गाय गर्भिणी दिनन की।
आय सपद् गोपाल लीजै गोरस रसिक वर ॥६६॥

००००

समीपे नीपानां त्रिचतुरदला हंत गमिता
त्वया या माकन्दप्रियसहचरीभावनियतिम्।
इयं सा वासन्ती गलदमलमाध्वीकपटलो-
मिषादग्रे गोपीरमण रुदती रोदयति नः ॥६७॥

—श्रीकृष्णेनारोपितां वासन्तीं स्मरयति समीप इति। हे गो
! सेयं वासन्ती माधवीलता अग्रे पुरतः गलदमलमाध्वीकपट-
त् स्वच्छनिर्म्मलमधुधाराकुलच्छलात् रुदती सती नोऽस्मान् रोद
ो विरहेण रुदतीं वासन्तीं वीक्ष्यास्माकं स्मरणात् रोदनं भव

त्युक्तम् । तस्मात् 'अस्या विरहापनोदनाय अवश्यमेव गन्तव्यमिति ध्वनितम् । इयं कीदृशी या वासन्ती हन्त इति खेदे, त्रिचतुरदला, नीपानां कदम्बानां समीपे माकन्दप्रियसहचरीभावनियतिं त्वया गमिता, माकन्द आम्रवृक्षस्तस्य पत्नीभावस्य नियतिं विधानं तत्र रोपितो माकन्दः वासन्तीकन्यकया आलिङ्गित इव श्रीकृष्णस्तु स्वयं पितैव, अतो ऽतिस्नेहपरत्वाद्गमनमाक्षिप्तम् । त्रिचतुरदलत्वेनातिबालत्वं युक्तम् । "माकन्दः सहकारेऽस्त्री रात्रीनगरभेदयोरिति" मेदिनी । "मिषन्तु स्पर्शन-व्याजे" इति विश्वः ॥६७॥

अनु०—हे गोपीरमण ! हे गोपिकानन्दनवर्द्धन ! आपके व्रजवास के समय कदम्ब वृक्षों के निकट वाली जिस-माधवी लता में तीन-चार पत्रों का उद्गम हुआ था और तुम जिसे आम्रवृक्ष की प्रिय-सहचरी बना गए थे अर्थात् आम्रतरु के साथ जिसकी जोड़ी मिला गए थे, वही वासन्ती लता आज हमारे सन्मुख विमल, मकरन्द-धारा वर्षण के मिष मानों तुम्हारे विरह में रोदन करती हुई हम सबों को भी रुला रही है । अर्थात् तुम्हारी विरह-वेदना हृदय में गंभीर भाव से प्रगट होकर हम सबको शोकाकुल कर रही है ॥६७॥

प्रागूरूप-दोहा

फूली लखि तरु अरु लता, बढ़ी मदन तन ज्वाल ।
बरनत ललिता हंस प्रति, विरह व्यथा व्रजबाल ॥६७॥

मूल की भाषा पद्य—छप्पय

हे गोपीजन रमन ! कदम्बन थल नियराये ।
लता माधवी तीन चार दल जामें आये ॥
कियौ आपनें ताकौ ब्याह आम्र पादप सँग ।
सो अब प्रफुलित भई भरत मकरन्द पहुप अँग ॥

मानौ या मिस रावरे दरस हेतु रोदन करत।
और रुआवत हमहुँ कों दृगन नोर निस दिन झरत ॥६७॥

सारांश–सोरठा

नूतन निकट रसाल फूली वासन्ती लता।
ताहि निरखि ब्रजबाल दुखित होत हरि! आप बिनु॥६७॥

○○○○

प्रसूतो देवक्या मधुमथन यः कोपि पुरुषः
स जातो गोपालाभ्युदयपरमानन्दवसतिः।
धृतो यो गान्दिन्या कठिनजठरे सम्प्रति ततः
समन्तादेवास्तं शिव शिव गता गोकुलकथा ॥६८॥

टीका—अतिकरुणास्य तवास्मान् परित्यागस्तु अक्रूरदोषेणेत्यादि अक्रूरमाक्षिपति प्रसूत इति। हे मधुमथन! देवक्या यः कोऽपि मनोवचनागोचरः पुरुषः प्रसुतः स गोपालाभ्युदयपरमानन्दवसतिः गोपाणामभ्युदयः अभीष्टस्तत्सहितस्तेन वा यः परमानन्दस्तस्य वसतिः निलयो जातः। अनेन धन्या सा देवकी या परोपकारकः प्रसूत इति ध्वनितम्। गान्दिन्या कठिनजठरे यो धृतः ततो हेतोः सम्प्रति इदानीं शिव शिव इति खेदे गोकुलकथा सर्वत एव अस्तं गता, कठिनजठराद्भूतत्वात् सोऽप्यतिकठिनः, यतः उक्तं–"कारणगुणाः कार्य्यगुणानारभन्ते" इति एतेन त्वया बिना सर्वेषामेव ब्रजवासिनां महती विपद् इत्युक्तम् ॥६८॥

अनु०—हे मुरारे! देवकी से उत्पन्न हुआ कोई पुरुष जो गोपगण का अभीष्ट विषय एवं मंगलों का निधान तथा आनन्द का निवास स्थल हो चुका था अर्थात् वह गोपगणों की अभिलाषाऐं पूर्ण करके उनको आनन्द-प्रदान किया करता था। सो गान्दिनी के कठोर जठर से उत्पन्न हुए, नाम ग्रहण के भी अयोग्य

ऐसे क्रूर अक्रूर ने"'हाय, हाय, आज गोकुल की कथा ही विलुप्त करदी ! अर्थात् गोकुल का लीला-माधुर्य एवं प्रेम विलास तो दूर रहा, उसकी चर्चा, उसकी बात ही अब विनष्ट हो गई। श्रीकृष्ण ने गोकुल में कोई लीलायें की थीं उनकी स्मृति ही अतीत के गर्भ में विलीन हो गई ॥६८॥

प्रागूरूपदोहा

सब प्रकार आनन्द प्रद, गोप वृन्द के आप।
दीनौ यह अक्रूर नें, हमहिँ विरह सन्ताप ॥६८॥

मूल की भाषा पद्य-छन्द दोबै

हे मधुमथन ! देवकी नें तुम सुत विचित्र जन्माये।
गोपालन कौ भाग्य जग्यौ आनन्द सदन मन भाये॥
कठिन गर्भ गान्दिनि तें प्रकटे जग अक्रूर अमाने।
शिव शिव जिन तें गोकुल के सब सुख सवाद सिपाने॥६८॥

सारांश-सोरठा

प्रकटे मधरिपु आप गोप जनन कल्याण हित।
दारुण दुःख कलाप भये हेतु अक्रूर हैं॥६८॥

००००

अरिष्टेनोद्धूताः पशुपसुदृशो यान्ति विपदं
तृणावर्त्ताक्रान्तो रचयति भयं चत्वरचयः।
अमी व्योमीभूता व्रजवसति-भूमीपरिसरा
वहन्ते नस्तापं मुरहर विदूरं त्वयि गते ॥६९॥

टीका—त्वां विना त्वया निहता अपि दानवाः तां जयन्तीति कोपमुद्री-पयति आह अरिष्टेनेत्यादि। हे मुरहर ! त्वयि विदूरं गते सति पशु-पसुदृशो गोपरमण्यः अरिष्टेन अरिष्टासुरेण उद्धृताः कम्पिताः सत्यः विपदं विनाशं यान्ति, अथ च अरिष्टेन अशुभेन त्वया विना सर्वगोप्य

अशुभाक्रान्ता नाशं यान्ति । अथवा इदानीं गोपीनामीदक् कार्श्यं यत् अरिष्टेन काकेन कङ्केन वा उद्धूताः पक्षवातचलिता अपि सख्यः विपदं वीनां पक्षीणां पदं स्थानं आकाशं यान्ति । एतेन ,केवलमस्थिचर्म्मावशिष्टा सख्यः त्वदागमनप्रत्याशया प्राणान् धारयन्तीति दशमावस्थां प्राप्तप्राया इत्युक्तम् । चत्वरचयः चत्वराणि तृणावर्त्तनासुरेणाक्रान्तः समयं रचयति जनयति, अथच तृणावर्त्तः परिणामः तेनाक्रान्तः चत्वरेषु त्वां विना जनानामवस्थानाभावात् सर्व्वतस्तृणानि जातानि, अतः कान्ततया तदालोकः स्त्रीणां भयं भवतीत्यर्थः । अमी ब्रजवसतिभूमिपरिसराः ब्रजप्रान्तदेशाः व्योमीभूता जाता नोऽस्माकं तापं वहन्ते कुर्वन्ति अतिभयाकुलतया सर्व्वत्र तस्यालोकनात् , अथच व्योमीभूता शून्यीभूता भवद्भिरहेण सर्वशून्यप्राया अवलाकारणात् मनस्तापः । "अरिष्टः फेनिले निम्बे अशुभे काककङ्कयोः । अरिष्टं सूतिकागारे तक्रे चिन्हे शुभाशुभे । अरिष्टं रिष्टमित्युक्तमरिवृषभयोः मतः" इत्यनेकार्थध्वनिमञ्जरी ॥६६॥

अनु०—हे मुरारे ! आपके दूर देश मधुपुरी चले जाने पर अब अरिष्टासुर द्वारा युद्धार्थ आह्वान की हुई गोप-सुन्दरी गण बड़े विपद में पड़ गई हैं एवं यहां के सभी चौराहे तृणावर्त्त असुर के भय से आक्रान्त हो भयानक प्रतीत होते हैं । प्रायः इस वृन्दावन का समस्त सीमा-प्रदेश व्योमासुर द्वारा अधिकृत हो जाने से हमारे मन को पीड़ा एवं उद्वेग उत्पन्न कर रहा है ! पक्षान्तर में इस पद्य की यह व्याख्या हो सकती है कि—तुम्हारे मधुपुरी चले जाने पर गोपीगण, आसन्न अशुभ-सूचक चिन्ह देखकर व्याकुल हो रही हैं, चौराहे धूलि-तृण-पुञ्ज-पूर्ण भयानक होरहे हैं और तो क्या समग्र ब्रज-मण्डल ही शून्य दीखने से सन्तापजनक हो रहा है ॥६६॥

भागुरूप-दोहा

शून्य दशा जैसी भई, हरि बिन ब्रज की हंस।
कहिये उन सों जाय के, तैसी खग अवतंस ॥६६॥

मूल की भाषा पद्य-छप्पय

विपति ग्रसी अति दुखित अरिष्टासुर सों गोपी।
रहत भयंकर तृणावर्त्त गति हम पर रोपी॥
बसत रही जो सघन सदा सों ब्रज की धरनी।
सो अब व्योमासुर सम लागत है भय बदनी॥
तजि गये दूर जब तें रह्यौ हम सब कौ दुख मय कथन।
अब होत शुभागम आय के, मिटहि ताप हे मुर मथन ॥६६

तात्पर्य-बरवै छन्द

बछरा परत अरिष्टासुर सम जान,
तृणावर्त सम होत भभूरे भान
व्योमासुर लौं यह ब्रज भूमि लखात,
कृष्ण विरह सों जरत हमारे गात
आय मिटाऔ गोपिन कौ सब क्लेश,
कहौ हंस तुम हरि सों यह सन्देश॥५

००००

**त्वया नागन्तव्यं कथमपि हरे! गोष्ठमधुना**
**लताश्रेणी वृन्दावनभुवि यतोऽभूद्विषमयी।**
**प्रसूनानां गन्धं कथमितरथा वातनिहितं**
**भजन् सद्यो मूर्च्छां वहति निवहो गोपसुदृशां ॥७०**

टीका—आगमननिषेधव्याजेन स्वं स्वं दशां व्यञ्जयन्ती तस्य झटित्या-गमनसम्भ्रममेवाभिप्रेत्याह त्वया इति। हे हरे! कथमपि-कदाचिदपि

गोष्ठं त्वया नागन्तव्यं तत्र हेतुमाह लतेति। यतो वृन्दावनभुवि लता-श्रेणी अधुना इदानीं विषमयी अभूत्, तत्र लिङ्गमाह-इतरथा अन्यथा गोपसुदृशां निवहः गोपीचयः वातनिहितं पवनेनार्पितं प्रसूनानां गन्धं भजन् कथं सद्यस्तत्क्षणमेव मूर्च्छां वहति प्राप्नोति। नहि विषमयं बिना दूरात् पवनानीतगन्धभजनमात्रेण मूर्च्छा भवति, तस्मात् विषमयमेव। गोपसुदृशामित्युक्त्या पुंसां मूर्च्छाया अभावाद् विरहजनितमूर्च्छा वा ध्वनिता ॥७०॥

अनु०—हे हरे! अब आपको इस गो गोप-स्थल वृन्दावन में नहीं आना चाहिए, कारण कि वृन्दावन का लता-समूह अब विषाक्त होगया है। यदि ऐसा न होता तो वायु द्वारा प्रेरित उनका गन्ध ग्रहण करके ये व्रज-सुन्दरीगण मूर्च्छा दशा को क्यों कर प्राप्त होती? तात्पर्य यह है कि—गोपी-गण की मूर्च्छा का कारण कृष्ण-विरह ही है। विषाक्त पुष्प-गन्ध के आघ्राण छल से श्री-कृष्ण-विरह का विषवत् प्रभाव व्यञ्जित होता है ॥७०॥

प्रागरूप-दोहा

आप न आवेंगे यहां, भयौ हमहिँ बिस्वास।<br>
करत हंस सों कृष्ण प्रति, ललिता बचन विलास ॥७०॥

मूल की भाषा पद्य-छन्द गीतिका

हे कृष्ण! अब नहिँ आय हौ व्रज, बात यह निहचै भयी।<br>
तुम जानि वृन्दावन धरनि की लता पाँतिन विषमयी॥<br>
यदि ये हलाहल युत नहीं तौ सुमन गंध समीर है।<br>
क्यत गोपिका होतीं तुरत मूर्छित अधीर शरीर है ॥७०॥

सारांश-सोरठा

करहिँ न कबहुँ प्रमान लता पांति व्रज विष भरी।<br>
ये सब सुधा समान होंहि आप के दरश सों ॥७०॥

०००० 

कथं सङ्गोऽस्माभिः सह समुचितः संप्रति हरे !
वयं ग्राम्या नार्यस्त्वमसि नृपकन्यार्चितपदः ।
गतः कालो यस्मिन् पशुपरमणीसङ्गमकृते
भवान् व्यग्रस्तस्थौ तमपि गृहवाटीविटपिनि ॥७१॥

टीका—अन्तराविष्कृतक्रोधा सोल्लुण्ठमाह कथमिति । हे हरे ! सम्प्रति इदानीं अस्माभिः सह सङ्गम अर्थात् भवतः कथं समुचितः, नैवेत्यर्थः । "सम्प्रति" पदोपदानात् तदानीं समुचित आसीदित्युक्तम् । तत्र हेतु-माह-वयं ग्राम्या आत्मविदग्धा इत्यर्थः । त्वं नृपकन्याभिरर्चितौ सेवितौ पादौ यस्येति, अतोऽयोग्या अधीरत्वात् क्रोधं सम्वरितुमसमर्था, गत इति-स कालो गतः अतीतः कोऽसौ कालः इत्यत आह-यस्मिन् काले पशुपरमणीसङ्गमकृते गोपीनां सङ्गमकृते गोपीनां सङ्गमार्थं व्यग्रः सन् निशि निशि भवान् वहिः सीमनि सीमान्ते जजागार जागरितवान् व्यग्रस्तस्थौ । तमसि गृहवाटीविटपिनि इति चतुर्थचरणे क्वापि पाठः । तदायमर्थः-तमसि अन्धकारे गृहवाटीविपिने गृहसमीपे वाटिकायां वृक्षे व्यग्रः सन् निशि निशि भवान् वहिः सीमनि सीमान्ते जजागार जाग-रितवान् व्यग्रस्तस्थौ इत्यन्वयः । एतेन इदानीमेव महत्त्वं भवत इत्युक्तम् । इयं धीराधीरानायिका तथा चोक्तं-"धीराधीरा तु सोल्लु-ण्ठभाषितैः खेदयत्यमुम्" अमुं नायकमित्यर्थः ॥७१॥

अनु०—हे हरे ! अब हम लोगों का सङ्ग करना क्या आपको उचित है ? अर्थात् अब आप हमारे साथ रहना क्यों उचित समझेंगे । कारण कि, हम अविदग्धा (ग्राम्य) वन वासिनी नारी हैं एवं आपके चरणों की सेवा मथुरा पुरी की राजकन्याएँ करती होंगी । हाय ! वह समय अब नहीं रहा जब आप गोपी मिलन की आशा से अर्थात् श्री राधिका का संग-सुख लाभ करने के लिए निशीथ के अन्ध कार में सघन पल्लवावृत, वृक्ष-तल प्रदेश में उत्क-

ुत ही प्रतीक्षा किया करते थे ! ज्ञात होता है पहली बातें आ
ति-पटल पर उदय भी नहीं होती होंगी ? कारण कि, अब
ाप राजकन्या-गण की सेवा प्राप्त करते हैं। उत्कृष्ट वस्तु
ने पर निकृष्ट का आदर कौन करै ? ॥७१॥

आगरूप-दोहा

ललिता हंसहि सजग करि, कहत कृष्ण के काज।
सब गोपिन की ओर सौं विनय यहै ब्रजराज ॥७१॥

मूल की भाषा पद्य-छप्पय

उचित कौन बिधि साथ आपके रहन हमारी।
हे हरि ! हम हैं सरल हृदय अत्यन्त गँवारी॥
अब पद सेवा करत आपकी राज कुमारी।
बीत गयौ वह समय जबै गलियन अँधियारी॥
तुम सदन वाटिका तरुन तर गोपिन संग बिहार हित।
नित ठाढ़े जोवत बाट हे आतुर ह्वै आसक्त चित ॥७१॥

सारांश-सोरठा

नाहिं समय वह आज बीथिन बाट निहारते।
आवत होगी लाज सुधि कीन्हे ता काल की ॥७१॥

०००० 

वयं त्यक्ताः स्वामिन् यदिह तव किं दूषणमिदं
निसर्गः श्यामानामयमतितरां दुष्परिहरः।
कुहूकण्ठैरण्डावधि सह निवासात् परिचिता
विसृज्यन्ते सद्यः कलितनवपक्षा बलिभुजः ॥७२॥

—तवास्मत्त्यागे श्यामता एव दोष इत्याह वयमित्यादि। हे स्व
! वयं त्यक्ता अर्थक्रियात्वादिह कर्म्मणि क्तः, इदं किं तव दूषणं दो

नैवेत्यर्थः। तर्हि कस्यायं दोष इति चेत्तत्राह निसर्ग इति। श्यामानां मलीनानां अयं अतितरां दुष्परिहरो दुस्त्यज्यो दोष इति, कोऽसौ दोष इति सदृष्टान्तमाह-कुहूकण्ठैरिति कुहूकण्ठैः कोकिलैः अण्डावधि डिम्भावधि कृत्वा सहनिवासात् एकत्र वासाद्धेतोः परिचिताः वलिभुजः काकाः कलितनवपक्षैः संजातनूतनपत्रैः सद्भिः सपरतरक्षणमेव विसृज्यन्ते त्यज्यन्ते कोकिलाः श्यामाः भवानपि श्यामः अतो नैसर्गिकोऽयं दोषः कथं त्याज्यः, एतेन बाल्यावधि गोपपालितस्य तत्त्यागात् कृतघ्नश्च ध्वनितः। तथा च भवता दशमे-"आप्तकामा ह्याप्तकामा अकृतज्ञा गुरुद्रुह"इति। श्यामानामिति सम्बन्धे षष्ठी। 'अण्डं मुष्के चापं स्यादिति" मेदिनी। "ध्वाङ्क्षात्मघोष-परभृद्बलिभुक्वायसा अपि" इत्यमरः॥७२॥

अनु०—हे नाथ! आपके द्वारा हम परित्याग की जा चुकी हैं, क्या यह निन्दनीय बात है? अर्थात् हमें त्याग कर देने से जगत् में आपको कोई दोष नहीं देगा? कारण कि, श्यामरंग वालों की तो यह स्वाभाविक सी बात है! देखो, कोकिल-गण, बाल्य काल में काकों के दिए हुए आहार से पुष्ट होती हैं किन्तु पंख निकल आने पर अर्थात् उड़ने की सामर्थ्य होने पर तत्काल उन काकों का संग छोड़ चली जाती हैं! ध्वनि, अनुध्वनि पूर्ण इस पद्य में श्रीकृष्ण का चित्त-काठिन्य तथा प्रेम-औदास्य आदि अनेक आक्षेय प्रतीत होते हैं॥७२॥

प्रागूप—दोहा

ललिता ह्वै अति मलिन मन, कहत कृष्ण प्रति बैन।
हंस! कहौ हरि सों तुरत, वार्त्ता ये मति ऐन॥७२॥

मूल की भाषा पद्य—छन्द गीतिका

का दोष स्वामी! रावरौ, जो तजीं ब्रज बाला सबै।
है श्याम वर्ण स्वभाव यह करि सकत सो त्यागन कबै॥

कल कंठ अंडा पलत हैं काकन सदन मन भावते।
पुनि पंख निकरें त्यागि सो शिशु कोकिलन में आवते ॥७२॥

सारांश—सोरठा

राखत स्वारथ प्रीति कारे रँग वारे सकल।
करी कहा अनरीति तजीं आप ब्रज बाल जो ॥७२॥

◇◇◇◇

अयं पूर्वो रङ्गः किल विरचितो यस्य तरसा
रसादाख्यातव्यं परिकलय तन्नाटकमिदम्।
मया पृष्टव्योऽसि प्रथममिति वृन्दावनपते!
किमाहो राधेति स्मरसि कृपणं वर्णयुगलम् ॥७३॥

टीका—प्रस्तुतं कथयति अयमिति। मया रसात् रागात् किल वार्त्तायां प्रयत्नादावाच्यमित्यादि श्लोकोक्तेः, अयं पूर्वो रङ्गः यस्य विरचितः कृतं आख्यातव्यं इदञ्च नाटकं नाटकतुल्यं कलय शृणु, श्रव्य-दृश्यभेदात् काव्यं द्विविधं भवति। तत्र श्राव्यं माघादि, दृश्यं नटैरनुष्ठेयत्वात् नाटकं अनर्घराघवादिः। रङ्गो नृत्यस्थानं तत्र विघ्नोपशान्तये नटैः क्रियमाणं वन्दनादि पूर्वरङ्ग उच्यते। तथा चोक्तं—"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्व्वन्ति पूर्वरङ्गः स उच्यते"। तदेवाह—प्रष्टव्यमिति। अये हे वृन्दावनपते! प्रथमं तावत् प्रष्टव्योऽसि राधेति वर्णयुगलं किं स्मरसि अहो न वा? कीदृक् कृपणं अतिदीनं,वर्णस्य तथात्वाभावात् राधाया एव दैन्यं ज्ञेयम्। अयमाशयः—नामैव यदि विस्मृतं कुतस्तर्हि तद्विरहवेदना विज्ञाता इत्यतः प्रथमं नामस्मरणप्रश्नः। "रसो गन्धरसे जले शृङ्गारादौ विषे तिक्तादौ द्रव्य-गन्धरागयोः। इह धातु प्रभेदे च पारद-स्वादयोः पुमानिति" मेदिनी। "आहो उताहो किमुत विकल्पे किं किमुत च" इत्यमरः। "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णस्तु राक्षवे" इति च ॥७३॥

अनु०—हे वृन्दावनपते ! जिस नाटक के पूर्व-रङ्ग या अभि पूर्व में विघ्न-विनाश के हेतु मङ्गलाचरण स्वरूप को मैं सन्मुख कथन कर चुकी हूँ अब उसके विप्रलम्भ-रस मय, को सावधान हो श्रवण कीजिए। मैं प्रथम आप से यह प्रश्न हूँ कि, उस दीन 'राधा' का नाम भी कभी आपको याद है ? अर्थात् उसके विषय में भी कभी कुछ बातें आपके स्मृ में उदय होती हैं ॥७३॥

प्रागूप-दोहा

ललिता हरि सों कहन हित, हंसहि रही जताय।
होत कबहुँ श्रीकृष्ण कों, राधा की सुधि आय ॥७३॥

मूल की भाषा पद्य—छन्द रौला

हे वृन्दावन नाथ कृष्ण ! मैं पूर्वरङ्ग यह।
विरच्यौ राधा विरह रूप नाटक कौ रस सह ॥
सुनिये निश्चय सपदि प्रथम मैं ताहि उचारत।
द्वै अक्षर कौ राधा नाम कहा ? उर धारत ॥७३॥

सारांश—सोरठा

अति लघु राधा नाम जाके द्वै अक्षर सरल।
लेत कबहुँ घनश्याम व्यथित विरह निज जानि के ॥७३॥

००००

अये कुब्जद्रोणीकुहरगृहमेधिन् किमधुना
परोक्षं वक्ष्यन्ते पशुपरमणीदुर्नियतयः।
प्रवीणा गोपीनां तव चरणपद्मेऽपि यदियं
ययौ राधा साधारणसमुचितप्रश्नपदवीम् ॥७४॥

टीका—गोविन्दस्यानादरात् गोपीनां भाग्याभाव तत्र वर्णयति

इति । अये विषादकोपकोशयो: । अये कुञ्ज-द्रोणी-कुहरगृहमेधिन् ! कुञ्जद्रोणीकुहरे गृहस्थ ! अधुना परांचं तवासमचं पशुपरमणीदुर्नियतय: गोपीनामभाग्यानि किं वर्धन्ते कथयितुमशक्यान्येव अतिविस्तरत्वादिति भाव: । तत्र लिङ्गमाह-यद् यस्माद्गोपीनां प्रवीणा श्रेष्ठतरापि इयं राधा तव चरणपद्मे साधारणसमुचित-प्रश्नपदवीं सामान्यजनविषये उचितो य: प्रश्न: तस्य पदवीं मार्गं यथौ प्राप्तवती, यत्र सर्वगोपीश्रेष्ठाया राधायास्त्वयि तादृशी अवस्था तत्रान्यासां का कथा इति भाव: ।"अये कोपविषादार्थे"इत्यमर: ।"अथ कुहरं विवरं बिलमलि च" "भाग्यं स्त्री नियतिर्विधिरिति" च ॥७४॥

अनु०—हे निकुंज-केलिभवन-विहारी ! आपका कुंज कुटीर 'जल-सेचनी' पात्र के समान है जिसमें से निरंतर निगूढ़ निकुंज लीलाओं की रसधारा, निर्गत होती रहती है और वह सखी, मञ्जरी गण को सिञ्चन करती है किन्तु, हे केलि-कुंज-विलासी, आप इस समय उन लीलाओं के विषय में वीतराग होकर क्यों दूर निवास कर रहे हैं ? आपका दर्शन न पाने से अधिक दुर्भाग्य की बात इन गोपियों के लिए और क्या हो सकती है अर्थात् वह अनिर्वचनीय है । जो तुम्हारे श्री चरणों में अपना तन मन समर्पण कर चुकी हैं उन गोपियों में प्रधान, अखण्ड महाभाव स्वरूपिणी, त्रिभुवन में असाधारण प्रेम स्वरूपिणी, श्रीराधा इस समय दुर्भाग्य की चरम सीमा में प्राप्त होकर सामान्य नारियों की दशा में पहोंच चुकी है ! अहो, विधि की क्या विडम्बना है ॥७४॥

प्राग्रूप-दोहा

ललिता पूर्व प्रसंग में, राधा दशा मलीन ।
कहत हंस सों कृष्ण प्रति, गद्‌गद स्वर अति दीन॥७४॥

मूल की भाषा पद्य—छन्द गीतिका

हे बुद्धिवान लतान गृह के छिद्र द्वार निवास में ।
. का कहैं राधा की दशा दुर्नय विरह के त्रास में ॥

जो सकल गोपिन में चतुर प्रिय ता समान पदार्थना।
सो करत साधारण नियम सम पद सरोजन प्रार्थना ॥७४॥

सारांश—सोरठा

रही रैन दिन साथ जो राधा सब सों चतुर।
त्यागी सो यदु नाथ साधारण बनितार सम ॥७४॥

००००

**त्वया गोष्ठं गोष्ठीतिलक किल चेद्विस्मृतमिदं**
**न तूर्णं धूमोर्णापतिरपि विधत्ते यदि कृपाम्।**
**अहर्वृन्दं वृन्दावनकुसुमपालीपरिमलै-**
**र्दुरालोकं शोकास्पदमथ कथं नेष्यति सखी ॥७५॥**

टीका—इदानीं राधायाः त्वया मरणनिवारणादिवसानां गमनीयाः इत्याह त्वयेति। हे गोष्ठीतिलक! गोष्ठश्रेष्ठ! किल निश्चितं चेद्यदि इदं गोष्ठं त्वया विस्मृतं धूमोर्णापति र्यमः तूर्णं शीघ्रं कृपां न विधत्ते न करोति न मारयतीत्यर्थः, इह विरहदशायां सखी राधा अहर्वृन्दं दिवससमूहं कथं केन प्रकारेण नेष्यति गमयिष्यति, एतेन त्वां बिना मरणमेवास्याभीष्टं न त्वन्यत् गृहस्वाम्यादीत्युक्तम्। कीदृशं वृन्दावनेति वृन्दावनस्य या कुसुमपाली पुष्पश्रेणी तस्याः परिमलैः सुरभिगन्धैः हेतुभिः दुरालोकं अवलोकयितुमशक्यं उद्वेगजनकत्वात् यत उक्तं "हसितानि सुगन्धानि सरांसि च वनानि च। सम्भोगाभिमुखं कुर्युरुद्वेगं विरहे भृशमिति"। "तिलको भालचित्रं स्यात् प्रधाने तिलको मतः। तिलको वृक्षभेदे च तिलकं बिन्दुचित्रे च" इत्यनेकार्थध्वनिमञ्जरी। "धूमोर्णा यमभार्य्येति पौराणिकाः"। तथा च महाभारते उद्योगपर्व्वणि गालवचरिते "यथा धूमोर्णत्वासम इति दिवोदास" इति। "धूमोर्णापतिरुद्दिष्टो यमो महिषवाहन" इति हारावली। "पाली कर्णलताग्रे-

ऽगुपंस्काबुभोपदेशयोरिति" मेदिनी । उद्वेगजनकत्वं च दशाकथन-मस्मिन् ॥७५॥

अनु०—हे गोपी समाज-भूषण, आपके विना आजकल गोपीगण का सौन्दर्य माधुर्य मलिन हो चुका है, और जैसे भूषण,अङ्गों की शोभा बढ़ाते हैं, वैसे ही आप भी गोपी समाज का गौरव बढ़ाते हैं। अब यदि आप इस वृन्दावन को भूलगए हैं तभी इन पर यम-राज भी दशवीं दशा अर्थात् मृत्यु रूप में कृपा नहीं कर रहा है। अर्थात्-राधा का प्राण-वियोग भी नहीं होता है तो कहिये कि यह राधा वृन्दावन की कुसुम-सौरभ द्वारा आपकी स्मृति का उद्दीपन होते ही अत्यन्त दुःख जनक उग्र वेदनाप्रद विरह के इन दिनों के किस तरह निकालेगी ? अतः आप यदि शीघ्र वृन्दावन पधारें तभी इस समय राधा को देख पा सक्ते हैं ॥७५॥

भावरूप–दोहा

चाहत हरि कौ आगमन, राधा को लखि दीन।
कहत हंस सों कृष्ण प्रति, ललिता चित्त मलीन ॥७५॥

मूल की भाषा पद्य–छप्पय

हे शृङ्गार सभा भूषण ! तुम ब्रज विसरायौ।
धूमोर्णा पति यम न अनुग्रह निज दरसायौ ॥
शीघ्र न आयौ काल किधौं आये न मुरारी।
तौ कैसे सहि सकै व्यथा यह सखी हमारी ॥
जो करत सुगंधित सकल थल पुष्प पांति वृन्दा विपिन।
किमि काटि सकै इन दिनन कों दुखित राधिका आप विन ॥७५॥

सारांश–सोरठा

दुखद भये सब फूल कृष्ण आप के विरह में।
प्राण तजन अनुकूल जानत राधा दुखित ह्वै ॥७५॥

००००

तरङ्गैः कुर्वाणा शमनभगिनीलाघवमसौ
नदीं काञ्चिद् गोष्ठे नयनजलपूरैरजनयत् ।
इतीवास्या द्वेषादभिमतदशाप्रार्थनमयीं
मुरारे ! विज्ञप्तिं निशमयति मानी न शमनः ॥७६॥

टीका—पुनस्तामेव दशां वर्णयति तरङ्गैरिति । असौ राधा नयनजलपूरैः अश्रुजलप्रवाहैः गोष्ठे काञ्चिदनिर्वचनीयां नदीमजनयत् प्रवर्त्तयामास । कीदृशीं तरङ्गैः कल्लोलैः शमनभगिनी यमुना तस्याः लाघव अतितुच्छत्वं कुर्वाणा यमुनापेक्षयापि अति महतीत्यर्थः । हे मुरारे ! इति हेतोः अस्या राधाया द्वेषात् अभिमतदशाप्रार्थितमयीं अभिमतदशाया प्राप्तदशायां यत् प्रार्थितं तस्माच्चुर्य्येण प्रस्तुतां, यद्वा स्वरूपे मयट् अभिमतदशायां प्रार्थितां तत्रातित्वात् पुरवं, विज्ञापनां मरणप्रार्थनामिति यावत्, शमनो यमः न निशमयति न शृणोतीत्यर्थः । कीदृशः शमनः मानी अभिमानयुक्तः । अयं भावः—इयं अश्रुजलेन नदीं विधाय शमनभगिन्याः लाघवमकरोत्, अतोऽहमस्याश्चिरतरमतिविरहवेदनया दुःखमेव दास्यामि ननु प्राणान् अपहरामि इति प्रार्थनां न शृणोति । "पूरो जलप्रवाहे स्यादिति" कोषः ॥७६॥

अनु०—हे मुरारे ! जिसकी उद्वेलित(उत्थित)तरङ्गमाला यमुना की तरंगों को भी तिरस्कृत करती है, श्रीराधिका के नयन-जल प्रपात द्वारा ऐसी एक वेगवती नदी प्रगट होगई है, इस कारण अपनी भगिनी यमुना की लघुता मानकर द्वेष वश अभिमानी यमराज भी राधिका की मरण प्रार्थना को नहीं स्वीकार करता है ॥७६॥

प्रागुक्तपदोहा

याही विरह प्रसंग में, राधा दशा कुचैन ।
कहत हंस सों कृष्ण प्रति ललिता दुख मय बैन ॥७६॥

मूल की भाषा पद्य—कुंडलिया

राधा नैनन नीर सों व्रज प्रवाह प्रगटान ।
ताकी लहरन तें भयौ अति लघु यमुना मान ॥
अति लघु यमुना मान बहन यम की सब जानत ।
सो अभिमानी महा वैर हिय में यह आनत ॥
नाहिँ देत वह मृत्यु अहै जो सुख की साधा ।
अहो मुरारी ! मरन भलौ गनि यम आराधा ॥७६॥

सारांश—सोरठा

चाहत तजन शरीर करत विनय यमराज सों ।
राधा निपट अधीर कृष्ण ! आपके विरह में ॥७६॥

००००

कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद्दृष्ट्वा दूरादहितहितबोधोज्झितमतिः ।
हता सेयं प्रेमानलमनुविशन्ती सरभसं
पतङ्गीवात्मानं मुरहर मुहु र्दाहितवती ॥७७॥

टीका—त्वयि जनिता भ्रमो ऽयं हठात् हतेति कथयति कृतेत्यादि । हे मुरहर ! हता हतप्राया सेयं मम सखी राधा दूरात् किमपि वचनागोचरं तव गोचरं तव रूपं सकृदेकवारं दृष्ट्वा सरभसं सहर्षं यथा स्यात् प्रेमानलं प्रेमाग्निं मुहुरनुप्रविशन्ती सती आत्मानं दाहितवती । हताशेति तालव्यशकारवत् पाठे तु हताशा इयं मम सखी यथेष्टभोगाकरणात् हताशा, तं कीदृशं कृता आकृष्यते हठात् वशीक्रियते अनया आकृष्टिः करणोक्तिः यद्दर्शनमात्रेण सर्वो वशीभवन्तीत्यर्थः । सा चासौ क्रीडा चेति कृता आकृष्टिक्रीडा येन तत्, यद्वा आकृष्टि आकर्षणं दर्शनमात्रेण वशीकरणं सैव क्रीडा कृता आकृष्टिक्रीडा येन तत्, यद्वा कृतानि गृह-

कर्म्माणि आकृष्यन्ते अनया कृताकृष्टिः तथा विधा क्रीड़ा यस्य तत्, यद्दर्शनमात्रेण समस्तगृहकर्म्माणि विस्मृत्य तदेकता भवतीत्यर्थः। नन्वेवञ्चेत् किमिति प्रेमानलं निविष्टा तत्राह अहितहितबोधोज्झितमतिरिति अहितहितयो यौं बोधः इदमहितमिदं हितमिति ज्ञानं तेन उज्झिता बहिष्कृता मतिर्यस्या सा, विशेषावधारणरहितत्वात् एवं कृतवतीति भावः। हिताहितेति वक्तव्ये पूर्वो निपातो व्यभिचारात्। यद्वा धर्म्मार्थादौ पठितव्यम्। किं च पतङ्गीव पतङ्गी शलभी हिताहितबोधाभावात् रूपं दृष्ट्वैव अनलमनुविश्य यथा आत्मानं देहं दाहयति, तद्दाहभस्मीकरणार्थतावृत्तेरकर्म्मकतामादाय प्रयोज्यस्य कर्त्तुः कर्म्मत्वम्। यथा काष्ठं दहतीत्यत्र भस्मीभवेत् काष्ठं भस्मकरोतीति करोत्यर्थस्य सर्व्वत्रान्यगतभरणार्थत्वात्, तथा च श्रीधरस्वामिधृतकारिका—"करोति क्रियमाणेन न कश्चित् कर्म्मणो बिना। भवत्यर्थस्य कर्त्तुर्वा करोतेः कर्म्म जायते। करोत्यर्थस्य यः कर्त्ता भवितुः स प्रयोजकः। भविता तमपेक्षार्थं प्रयोज्यत्वं प्रपद्यते" इति। यद्वा अन्येऽपि धातवः क्वचिदिति चौरादिको णिङ् कर्त्तव्यः। "पतङ्गौ सुर्य्यशलभाविस्यमरः" ॥७७॥

अनु०—हे मुरारे! हत-भागिनी यह मेरी सखी राधा प्रेमानन्दमय आपके रूप को एक ही बार दूर से दर्शन करके हिताहित शून्य तथा बुद्धि विहीन सी होचुकी है। अब वह आपका रूप, अपूर्व आकर्षण क्रीडा सी कर रहा है अर्थात् उसका प्राणाकर्षण कर दुःखान्त लीला का विस्तार कर रहा है। इसका भावी परिणाम क्या होगा? और वह प्रेमोन्मादिनी होकर पतङ्गी की भांति तुम्हारे प्रेमानल में प्रवेशकर अपनी देह को दग्ध कर चुकी है। हाय इसके भाग्य में ऐसा ही लिखा था,इसमें आपका क्या दोष है॥७७॥

मुखोल्लास-दोहा

बीती घटना हंस सों, ललिता पूर्व प्रसंग।
बरनत हरि प्रति कहन हित, राधा प्रीति अभंग॥७७॥

मूल की भाषा पद्य—छप्पय

हे मुरारि श्रीकृष्ण सखी मेरी यह राधा।
आप संग क्रीड़ा करि दूरहि तें रस साधा॥
एक बेर ही अकथ रूप रावरौ निहार्यौ।
हित वा अहित बोध तानें तनिकौ न विचार्यौ॥
मुदित पतंगी कीट लों प्रेम अग्नि में तनु दियौ।
अब भई हताशा सर्वथा बार बार जारत हियौ॥७७॥

सारांश—सोरठा

नहिँ जान्यौ परिणाम धाय पतंगी कीट लौं।
प्रेम अग्नि में श्याम निज तनु दीनौ राधिका॥७७॥

००००

**मया वाच्यः किं वा त्वमिह निजदोषात् परमसौ**
**ययौ मन्दा वृन्दावनकुमुदबन्धो ! विधुरताम्।**
**यदर्थं दुःखाग्निर्विकृषति तमद्यापिहृदया-**
**न्न यस्माद्दुर्मेधा लवमपि भवन्तं दवयति॥७८॥**

टीका—भवतेयं विस्मृत्यैव, इयन्तु त्वां क्षणमपि न विस्मारयतीत्याह मयेति। हे वृन्दावनकुमुदबन्धो ! वृन्दावनचन्द्र ! इह अस्यां विरहावस्थायां त्वां मया किं वाच्यः न किमपीत्यर्थः। कस्मादित्याह-असौ राधा परं केवलं निजदोषात् आत्मीयदोषात् विधुरतां विकलतां ययौ प्राप्तवती, निजदोषस्तु कुतोऽस्या इत्याह यदर्थं इति। यदर्थं यन्निमित्तं दुःखाग्निः दुःखरूपोऽग्निः विकृषति आकर्षति, आकर्षणे तुदादिः। यत् यस्मादियं दुर्मेधा दुर्बुद्धिः लवं मनाक् कालमपि तं भवन्तं हृदयान्न दवयति न दूरीकरोतीत्यर्थः। णिचि दूरस्य दवादेशः, यत्त्यागे सुखं भवति तत्त्यागकारणादेव दुर्बुद्धित्वम्। इयं कीदृशी मन्दा मूढ़ा अभा-

य्यवतीति वाथः। "मन्दोऽलीक्ष्णो च मूर्खत्वे स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्यात् हस्तिजात्यन्तरे शनौ" इति मेदिनी। "लवो निमेषस्य तृतीयभागः तथा चोक्तं–"निमिषस्त्रिलवो ज्ञेयः" ॥७८॥

अनु०—हे वृन्दावनचन्द्र! मैं अधिक क्या कहूँ, हिताहित विचार शून्य हमारी प्यारी सखी राधा अपने दोष के कारण ही विरह-कातर दशा का उपभोग कर रही है एवं तुमको आज क्षण मात्र के लिए भी अपने मन से दूर करने का समर्थ नहीं है! अतः उसके दुःख का कारण स्वयं वही है। इसे आपकी दुर्बुद्धि के अतिरिक्त और क्या कह सकते हैं? इस स्थान पर इतना कष्ट होते हुए भी वह 'श्रीकृष्ण को भूलने में असमर्थ है', यह कहने से श्री-राधाजी का एक निष्ठ-निरूपाधिक-प्रेम, अभिव्यक्त होता है ॥७८॥

### मुखोल्लास–दोहा

ललिता अति उद्वेग सों, राधा कौ अनुराग।
अरु अयान पन तासु कौ, कहत सहित हत भाग ॥७८॥

### मूल की भाषा पद्य–छन्द रौला

हे वृन्दावनचन्द्र! आप सों कहूँ कहा मैं।
आत्म दोष तें विवस भाग हत ग्रसित व्यथा में ॥
विरह अग्नि सों कृष्ण आपहि पल हू न विसारत।
है यातें दुर्मति राधा जो चेत न धारत ॥ ७८ ॥

### सारांश–सोरठा

दुख जा कारज माहिँ, ताही कों यह करत है।
फलहि विचारत नाहिँ मन्द बुद्धि यह राधिका ॥७८॥

०००० 

त्रिवक्राऽहो धन्या तव हृदयतुल्यं निजवपुः
समासाद्य स्वैरं यदिह विलसन्ती निवसति ।
ध्रुवं पुण्यभ्रंशादजनि सरलेयं निजसखी
प्रवेशस्तत्राऽभूत् क्षणमपि यदस्या न सुलभः ॥७६॥

टीका - इदानीमस्मान् त्यक्त्वा त्रिवक्रायामासक्तो भवानिति वक्तुं त्रिवक्रां स्तौति त्रिवक्रे ति । अहो विस्मये, असौ त्रिवक्रा कुब्जा धन्या, ननु किमिति धन्यात्वं तस्या इत्याह—यत् यस्मात् असौ त्रिवक्रा ते तव हृदयमिव स्वयं वपुः समासाद्य प्राप्य इह तव हृदये विलसन्ती सती स्वैरं स्वच्छन्दं निवसति अस्मात्तद्धृदयानुरूपवपुः प्राप्त्या विस्मयः, एतेन भवान् कठिनहृदयः सा हि कुटिलदेहेति योग्यसङ्ग इत्युक्तम् । इयं मम सखी ध्रुवं निश्चितं पुण्यभ्रंशात् पुण्यक्षयात् सरला अकुटिला अजनि जाता, अथ च सरला उदारा महतीत्यर्थः । ननु किमिति सरलता निन्द्यत इत्याह—यत् यस्मात् तत्र तव हृदये तस्याः प्रवेशः क्षणमपि सुलभो नाभूत् । अत्र प्रथमार्द्धे अप्रस्तुतप्रशंसा, अपक्रान्तायाः कुब्जायाः स्तुतिकरणात् । तथा च दण्डी—"अप्रस्तुतप्रशंसा सा स्यादक्रान्तेष्वलस्तुतिरिति" । शेषार्द्धे व्याजस्तुतिः निन्दामुखेन स्तुतिः सरलतागुणस्य प्रतिपादनात् । यदाह दण्डी—"यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता" ॥ अन्यत्र व्याजस्तुतिमुखे निन्देति । कृष्णस्य तु एतादृशीमुदारां राधां त्यक्त्वा कुब्जायामावेशात् अनभिज्ञत्वरूपो गूढोपहास इत्यर्थः । 'सरलः पूतिकाष्ठे तु उदारावक्रयोस्त्रिष्विति' मेदिनी । "ध्रुवं स्यात् निश्चिते तर्के निश्चये शङ्कान्ते ऽन्यवदिति" विश्वः ॥७६॥

अनु०—अहो ! आज तो त्रिवक्रा (तीन जगह से कुटिला) कुब्जा ही सौभाग्यशालिनी है जो कि तुम्हारे मनोनुकूल शरीर प्राप्त कर स्वच्छन्द विहार करती हुई निवास करती है और ऐसी प्रतीत

होता है कि हमारी सरला सखी 'राधा' ने तो पुण्यक्षीण होने के कारण इस संसार में वृथा ही जन्म लिया है। अन्यथा ब्रजवास काल में आप जैसों के लिए क्षणमात्र भी उसके हृदय में प्रवेश कर पाना सुलभ नहीं था। इस पद्य में गूढ़ प्रणयेर्ष्या व्यङ्ग है— अब यह कुब्जा त्रिवक्रा आप त्रिभङ्गाकार के मन को ही नहीं अपितु शरीर को भी वश कर चुकी है। जैसे को तैसे मिल गए हैं और आप बहुवल्लभ होने से मेरी सरला सखी आपके हृदय में स्थान भी नहीं पा सकी है ॥७६॥

मुखोल्लास–दोहा

कहत हंस सों कृष्ण कौ, कुबरी पै अनुराग।
ललिता या दुख सहित जो, कीनी राधा त्याग ॥७६॥

मूल की भाषा पद्य–छन्द रोवै

अचरज धन्य कूबरी ने निज अंग आप उर पायौ।
सहित भोग स्वच्छन्द या समय करत निवास सुभायौ ॥
निश्चय पुण्य क्षीण यह जनमी सखि मम सरल अबाधा।
हे हरि पल नहिँ प्राप्त करि सकी हृदय आप कौ राधा ॥७६॥

सारांश–सोरठा

सरल हृदय ब्रजचन्द कुटिल कूबरी तहँ बसी।
राधा सरल अमन्द करी दूर अचरज यहै ॥७६॥

००००

किमाविष्टा भूतैः सपदि यदि वा क्रूरफणिना
क्षतापस्मारेण च्युतमतिरकस्मात् किमपतत्।
इति व्यग्रैरस्यां गुरुभिरभितो कीचकरव-
प्रवादस्पन्दायां मुरहर विकल्पा विदधिरे ॥८०॥

टीका—श्रीकृष्णेऽत्याशक्तिं ज्ञापयितुं मुरारे ध्वनिश्रवणमात्रेण मूर्च्छाप्राप्तराधायाः कथयति किमित्यादि। हे मुरहर! अस्यां राधायां कीचकरवश्रवणात् विभ्रष्टायां पतितायां सत्यां अभितः सर्व्वतो व्यग्रैर्गुर्व्वीभिः श्वश्र्वादिभिः इति उक्तप्रकारेण विकल्पना नानापेक्षा विदधिरे इत्यर्थः। इतिशब्दापेक्षान् विकल्पानाह–किमिति सपदि तत्क्षणमेव भूतैरुपग्रहैः किं आविष्टा आक्रान्ता, ननु वैदिकमन्त्रादिनापसारितविघ्नेषु कुतो शङ्का एवञ्चेत् पक्षान्तरमाहयदिति यदि वा पक्षान्तरेऽथवेत्यर्थः। क्रूरफणिना दुष्टसर्पेण क्षता दष्टा? ननु सर्वेषामग्रणीरेव पतितः कुत्रोऽत्र फणीति विकल्पान्तरमाह–अपस्मारेण रोगविशेषेण क्षणमति भ्रष्टचेता सती, किमिति वितर्के अकस्मादपतत् अथवा वक्तृबाहुल्यात् पक्षबाहुल्यम्। "तत्कादौ पिशाचादौ बालौ क्लीवं त्रिषु चेति"। "प्राप्यक्षुत्ते समेऽमात्ये देवयोन्यन्तरे तु ना" इति मेदिनी। अपस्मारो यथा साहित्यदर्पणे-"मनः क्षेपस्त्वपस्मारो ग्रहाद्यवेशनादिजः। भूपात–कम्प–प्रस्वेद–फेण-लालादिकारक इति"। "कीचको दैत्यभिद्वाताहत सस्वनवंशयोरिति" मेदिनी ॥८०॥

अनु०—हे मुरारे! हमारी सखी श्रीराधा कीचक ध्वनि ( वेणु-कूजन-शब्द ) को सुनकर संज्ञाहीन हो धरातल में गिर जाती है, तब उसकी सास, ननद आदि चहुँदिस से उसे घेरकर उसकी मूर्च्छा का कारण जानने के लिए भूतावेश आदि की विविध कल्पना करती हैं, कोई कहती है–इसको असत् ग्रह का आवेश हुआ है,कोई तर्क करती कहती है यह तो हिंस्र-सर्प(पद्य-में अक्रूर-सर्प) द्वारा दष्ट हुई है या इसे अपस्मार ( रोग ) का आक्रमण है, इसी से यह पृथ्वी पर गिर जाती है॥८०॥

मुखोल्लास–दोहा

विरह दुःख सों राधिका, भई निपट तन छीन।
ताकी हरि सों दशा यह, कहिये हंस प्रवीन॥८०॥

मूल की भाषा पद्य-छप्पय

चहुँ ओर तें सुनत बांसुरी शब्द मुरारी !
थकित अङ्ग ह्वै गिरी राधिका सखी हमारी ॥
तब अति व्याकुल भये पिता मातादि तासु सब ।
करत अनेकन सोच भूत लाग्यौ या कों अब ॥
अथवा क्रोधित सर्प नें किधौं अचानक है डसी ।
वा अपस्मार के रोग नें बुद्धि भ्रंश करके ग्रसी ॥८०॥

सारांश-सोरठा

बंसी धुनि सुनि कान ग्वाल बजावत जो कबहुँ ।
राधा तजत अपान होत आप की सहज सुधि ॥८०॥

००००

नवीनेयं सम्प्रत्यकुशलपरीपाकलहरी
नरीनर्त्ति स्वैरं मम सहचरीचित्तकुहरे ।
जगन्नेत्रश्रेणीमधुर मथुरायां निवसत-
श्चिरादार्त्तां वार्त्तामपि तव यदेषा न लभते ॥८१॥

टीका—आसक्तिविशेषमुक्त्वा वार्त्तामप्यनश्रवणन्त्या विरह एव उचित एवेत्याह नवीनेति। सम्प्रति इदानीं मम सहचरी-चित्तकुहरे इयं नवीना नूतना अकुशलस्य अमङ्गलस्य यः परिपाकः परिणामस्तस्य लहरी तरङ्गः स्वैरं स्वच्छन्दं यथा स्यात्तथा नरीनर्त्ति अत्यन्तनृत्यति, कस्मादित्यत आह—हे जगन्नेत्रश्रेणीमधुर जगतां नेत्रपंक्तिप्रिय ! जगत्पदोपादानात् न केवलं मनुष्याणामित्युक्तम् तथा चोक्तं "खगो-द्विज-द्रुम-मृगाः पुलकान्यबिभ्रन्निति"। "अस्पन्दनं गतिमतां पुलकस्तरूणामिति" च। किञ्च जगन्नेत्रप्रियकरणमुचितमिति चाभिहितम्। मथुरायां चिरान्निवसतस्तव आर्त्तां वार्त्तामपि यत् यस्मात् न लभतेऽतः किंकुशलमस्तीत्यर्थः ॥८१॥

अनु०—हे त्रिभुवन मनोहर ! इस समय हमारी सखी का मन दुश्चिन्ता तरङ्ग से उद्वेलित हो उठा है और इसके हृदय में य. नवीन ही दुःख व्याप्त हो रहा है। "जैसे कि—वह कहां रहते होंगे ! और कंस जरासन्ध आदि विपत्तियों से निरापद हैं या नहीं ! और आप बहुत दिन से मथुरा निवास कर रहे हो अतः हमारी सखी राधा आपका कोई कुशल-सम्वाद भी तो नहीं पा सकी है। अर्थात् चिरकाल से कुशल सम्वाद न पाने से और भी दुःखिनी हो रही है ॥८१॥

मुखोल्लास-दोहा

राधाजी कौं विरह दुख, वाढ्यौ जो अत्यन्त।
कहौ कृष्ण सों हंस तुम, मथुरा जाय तुरन्त ॥८१॥

मूल की भाषा पद्य—छप्पय

हे जग नेत्र समूह सुखद हरि ! मम सखि राधा।
ताके प्राण छिद्र में अन्त दशा सह बाधा॥
अतिशय लहर स्वतन्त्र नवीन असंगल कारी।
नृत्य करत सो बार बार चित शंका धारी॥
बहु काल भयौ मथुरा गयें, ऐसौ दूर निवास का।
अब लों न सुनी सुधि आप की यातें दुर्नय त्रास का ॥८१॥

सारांश-सोरठा

यह अप कुशल निदान गये आप मथुरा पुरी।
का दुख यातें आन सुधि न मिली प्रभु आप की ॥८१॥

००००

जनान् सिद्धादेशान् नमति भजते मान्त्रिकगणान्
बिधत्ते शुश्रूषामधिकविनयेनौषधविदाम्।

त्वदीक्षादीक्षायै परिचरति भक्त्या गिरिसुतां
मनीषा हि व्यग्रा किमिव शुभहेतुं न मनुते ॥८२॥

टीका—त्वत्प्राप्तये नानाविधोपायं कथयितुं प्रोषितभर्तृकेति कर्त्तव्यतां करोतीत्याह जनानिति । सिद्धः आदेशः आज्ञा येषां ते वाक्सिद्धा इत्यर्थः, तान् जनान् नमति । मान्त्रिकवर्यान् मन्त्रसिद्धसमूहान् भजते सेवते । तथा औषधविदां मोहनाद्यौषधज्ञातान् अधिकविनयेन शुश्रूषां विधत्ते सेवां करोति । तथा च गिरिसुतां पार्वतीं परिचरति सेवते । प्राक् तत्सेवया भगवत् प्राप्त्या विश्रम्भात्, सर्व्वोपयुक्तं हेतुमाह—त्वदीक्षादीक्षायै इति भगवद्दर्शनमेव दीक्षा पापक्षयकारक्रियाविशेषः तदर्थं, दीक्षा इति गोपीवृत्तिः, सर्व्वत्र अधिकविनयेन इत्यस्यानुसङ्गः किञ्च भवदनुग्रहं विना किमप्यस्याः सुखहेतुरित्याह-यस्या इत्याह मनीषा इति अतिव्यग्रा व्याकुला मनीषा बुद्धिः किमपि अर्थात् किमपि कर्म सुखहेतुं न मनुते नाभिमन्यते इत्यर्थः । यद्वा अतिव्यग्रा मनीषा यस्याः सा मनीषातिव्यग्रा राजदन्तादिः व्याकुलबुद्धिरित्यर्थः ॥८२॥

अनु०—आजकल हमारी सखी राधा, आपके दर्शनों की कामना को लेकर सिद्ध महा-पुरुषों को प्रणाम करती रहती है तथा औषधि तत्वज्ञ वैद्यों की विनय पूर्वक सेवा करती है एवं भक्ति-भाव से प्रेरित होकर गिरिजादेवी (कात्यायनी) की आराधना में लगी हुई है अर्थात् कोई भी उपाय उसके सुख साधन में सहायक नहीं होता ॥८२॥

मुखोल्लास—दोहा

कहत हंस सों कृष्ण प्रति, ललिता यह समझाय ।
करत आप के मिलन हित, राधा विविधि उपाय ॥८२॥

मूल की भाषा पद्य—छप्पय

हे हरि वाञ्छा दरस आप की सों यह राधा ।
वाक्य सिद्ध पुरुषन कों नमत रहत हित साधा ॥

मंत्र शास्त्रविद तथा वैद्य औषध के ज्ञाता।
इन सबकी शुश्रूषा करत मानि फल दाता॥
अरु पारवती सेवा करत पै न मिटी गति ताप की।
व्याकुल विचारशीला नहीं जानति इच्छा आप की॥८१॥

सारांश—सोरठा

कीन्हे जतन विचारि सिद्ध सेव अर्चन शिवा।
जानति पै न मुरारि राधा इच्छा रावरी॥८१॥

००००

पशूनां पातारं भुजगरिपुपत्रप्रणयिनं
स्मरोद्बुद्धिक्रीडं निविडघनसारद्युतिभरम्।
सदाभ्यर्णो नन्दीश्वरगिरिभुवो रङ्गरसिकं
भवन्तं कंसारे भजति भवदाप्त्यै मम सखी॥८२॥

टीका—किञ्च पशूनामिति : हे कंसारे! मम सखी राधा त्वदाप्त्यै दास्यै दासी भवितुं दासीत्वं मनसि कृत्वेत्यर्थः। भवदाप्त्यै इति पाठः भवत्प्राप्त्यर्थमित्यर्थः। पशूनां पातारं पशुपतिं शिवं भजते सेवते, कीदृशं भुजगरिपुपत्रप्रणयिनं भुजगरिपुः मयूरः पत्रं वाहनं यस्य स तथा कार्त्तिकेयरित्यर्थः। स प्रणयी प्रियो यस्य स तं, पुनः कीदृशं स्मरेति स्मरस्य कामस्य उद्बुद्धः ध्वंस स एव क्रीडा यस्य तं, पुनः कीदृशं निविडघनसार इति निविडा अतिबहुला या घनसारस्य कर्पूरस्य द्युतिः कान्तिस्तां बिभर्त्ति इति तं, यद्वा निविडं पुञ्जीभूतो यो घनसारः कर्पूरः तस्यैव द्युतिभरो यस्य तं, पुनः कीदृशं सदा सर्वदा नन्दीश्वरगिरिभुवो नन्दि-पार्व्वत्योः अभ्यर्णो निकटे वद्धरमिके नृत्यक्रियावशयुक्तं भवन्तं, रङ्गो नृत्यं तत्र रसिकः अथच मम सखी भवदाप्त्यै भवं तं भजति। सिद्धादेशादीनां भजनं त्वयि अकिञ्चित्करमाकलय्य भवन्तमेव वरदेश्वरं सर्व्वमयं भजतीत्यर्थः। भवन्तं कीदृशं पशूनां व्रजस्य गवादीनां पातारं रक्षितारं, पुनः किम्भूतं भुजगेति भुजगरिपु मयूरः तस्य पत्रं प्रणयिनं

शिखिपिच्छचूडमित्यर्थः, यद्वा भुजगरिपुर्गरुडः स एव पत्रं वाहनं यस्य तं, यत्क्रीडाश्रवणमननादिपराणां कामध्वंसो भवति। तथा चोक्तं—"न मय्यावेशितधियां कामः कामाय कल्पते" इति। "विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद् यः। भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः" इति। पुनः कीदृशं निविडेति निविडोऽतिबहुलो यो घनसारो मेघश्रेष्ठः तस्यैव द्युति बिभर्ति इति वा पूर्ववत् सजलजलधरश्याममित्यर्थः। पुनः कीदृशं सदेति नन्दीश्वरः शिवस्तेनाध्यासितो गिरिः तस्य भूस्थलं तस्याभ्यर्णे निकटे सदा रङ्गरसिकं क्रीडापरं गोवर्द्धनगिरिपरिसरे क्रीडापरमित्यर्थः। अथ च पशूनां देवानां "पशुर्मृगादौ विज्ञेयः सम्यगर्थेऽव्ययं भवेत्"। "पत्रन्तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोरिति" ॥८३॥

अनु०—हे कंस-निशूदन ! हमारी सखी राधा, आपकी प्राप्ति के लिए जो मयूर वाहन श्रीकार्त्तिकेय के प्रति अत्यन्त प्रीति रखते हैं तथा कन्दर्प उच्छेद अर्थात्-मदन-दहन ही जिनकी लीला है और घन ( कपूर ) सदृश जिनकी अङ्ग कान्ति है तथा जो कृष्ण-प्रेम में सदा मतवाले से होकर नन्दी पार्वती के समक्ष नृत्य लीला प्रकाशित करते रहते हैं, उन्हीं सदाशिव श्रीशंकरजी की आराधना करती रहती है। इस जगह कृष्ण-विरह दशा में कन्दर्प भय से पीड़ित श्रीराधा का शंकरजी की शरण ग्रहण करना ध्वनित होता है। पक्षान्तर में-मेरी सखी वदरेश्वर, सर्वमय, ब्रज की गौओं के पालक, मयूरपिच्छविभूषित अथवा गरुडवाहन, कामध्वंसक लीला करने वाले, सजल जलधर श्याम, गोवर्द्धन गिरिपरिसर में रंगरसिक श्रीकृष्ण आपका ही भजन करती है ॥८३॥

मुखोल्लास—दोहा

कृष्ण मिलन हित राधिका, करत ध्यान तप साज।
ललिता वरनन हंस सों, हरि हि सुनावन काज ॥८३॥

मूल की भाषा पद्य-छन्द गीतिका

हे कंस नाशक कृष्ण ! मेरी सखी राधा सर्वदा ।
जानि सेवा सिद्ध गिरि तट की यथारथ फलप्रदा ॥

शिव पक्ष में—

पशुन रक्षक अरु उरग रिपु मोर जिन के यान हैं ।
सो निकट सेनानी, स्वयं प्रभु काम शत्रु प्रधान हैं ॥
कर्पूर आभा तनु,रसिक बर नृत्य, तिन आश्रय लहै ।
इमि पूजि नन्दीश्वर शिवहि वह आप को मिलनो चहै ॥८

श्रीकृष्ण पक्ष में—

पशुन के पालक उरग रिपु गरुड़ वाहन लसत हैं ।
कन्दर्प वर्द्धक रावरी क्रीड़ा कला तन बसत हैं ॥
रुचि अंग जलधर श्याम सो शुचि रसिक नृत्य अलाप के
बसि भूमि नन्दग्राम राधा, जपत शुभ गुण आप के ॥८३

सारांश—सोरठा

कृष्ण रूप को ध्यान शिव पूजा मिस राधिका ।
करत रहत स विधान नन्दगाम की भूमि में ॥८३॥

०००

भवन्तं सन्तप्ता विदलिततमालाङ्कुररसै-
र्विलिख्य भ्रूभङ्गीकृतमदनकोदण्डकदनम् ।
निधास्यन्ती कण्ठे तव निजभुजावल्लरिमसौ
धरण्यामुन्मीलज्जड़िमनिविडाङ्गी विलुठति ॥८४॥

—भवन्तमिति । सन्तप्ता असौ मम सखी विदलिततमालाङ्कुररसै
र्दलिततमालमञ्जरीद्रवैः भवन्तं विलिख्य तव कण्ठे निजभुजवल्लर
र्यं बाहुलतां निधास्यन्ती अर्पयिष्यन्ती सती धरण्यां विलुठति
। उन्मीलन् प्रकाशवान् यो जड़िमा जड़ता तेन निविडानि नि

यानि अङ्गानि करचरणादीनि यस्याः, सात्त्विकोऽयं जडिमा। कीदृशं भ्रूभङ्गीति भ्रुवोर्भङ्ग्या कृतं मदनकोदण्डस्य कामधनुषः कदनं क्लेशो येन. ततोऽतिसुन्दरत्वात् देवपूजादिः प्रियप्रतिकृतिलेखादिः च प्रोषित-भर्त्तृकायाः कृत्यम्, यदाह भरतः—"देवतापूजनं कुर्यात् दद्याद्वलिभुजे बलिम्। लिखेत् कान्तप्रतिकृतिं पाठयेच्छुकशारिकाम्। गणयेच्चावधि-दिनं गीतं गायेत्तदङ्कितम्। एवंविधैर्विनोदैस्तुस्तवलेन विना स्थितिः" ॥८४॥

अनु०—आपके विरहानल में संतप्त, हमारी सखी राधा, तमाल वृक्ष के अंकुरों को मर्दन कर उनके रस से, जिनकी माधुर्य-मंडित भ्रूभङ्गी काम-धनुष की शोभा को विलज्जित करती है, ऐसी सुन्दर आपकी मूर्त्ति को चित्रित करती है एवं उस मूर्त्ति के कण्ठ देश में ज्योंही अपनी बाहु-लता 'भुजाएं' अर्पित करना चाहती है त्योंही उसका शरीर जड़ता ( सात्त्विक भाव ) व्याप्त होकर पृथ्वी में गिर कर मूर्च्छित हो जाता है। अतएव इस दुख के विषय को जानकर आप अब औदास्य भाव से मथुरा न ठहरें और शीघ्र व्रजभूमि में आगमन करें ॥८४॥

मुखोल्लास-दोहा

राधा की जड़ दशा, ललिता करि विस्तार।
कहत हंस सों कृष्ण प्रति, विरह व्यथा अतिचार ॥८४॥

मूल की भाषा पद्य—छप्पय

तची आप के विरह तमालन पत्र स्वरस सों।
लिखत आप को चित्र भ्रूकुटि संचलन रभस सों॥
कीनो जिन कन्दर्प धनुष कौ प्रकट निरादर।
करि अवलम्ब रावरी भुज निज बाहु लताकर॥
सो भुजा कंठ निज धारि कै लोटति हैं संलग्न भुव।
यह राधा जी की जड़ दशा करत लालसा दरस तुव ॥८४

सारांश—सोरठा

लिखत आप कौ चित्र पत्र तमालन स्वरस सों।
लोटति है जग मित्र तापर राधा विरहिणी ॥८४॥

००००

कदाचिन्मूढेयं निविडभवदीयस्मृतिमदा-
दमन्दादात्मानं कलयति भवन्तं मम सखी।
तथास्या राधाया विरहदहनाकल्पितधियो
मुरारे! दुःसाधा क्षणमपि न बाधा विरमति ॥८५॥

टीका—ध्यानात्तन्मयताऽपि तस्याः अधिकदुःखदायिनीत्याह—इयं मूढा मम सखी कदाचिदमन्दादनल्पात् निबिडभवदीयस्मृतिमदात् निबिडा अविच्छिन्ना या भवदीया स्मृतिः स्मरणं तत्र यो मदो हर्षः तस्मादात्मानं भवन्तं कलयति कृष्णोऽयमिति ध्यायति, तथापि हे मुरारे! तस्याः क्षणमपि बाधा पीडा न विरमति न शाम्यति। राधायाः यो विरहस्तस्य कलना अनुभवस्तया दूना धीर्यस्याः। कल्पितेति पाठे तथा कल्पिता मरणबुद्धिर्यस्याः सा तथा, बाधा कीदृशी दुःसाध्या इत्यर्थः। यदनुध्यानेऽपि ता बद्ध्ते तत्र भवस्तं नान्मुक्तेःयुक्तम। विरहवलनेति पाठे राधायाः यो विरहस्तस्य वलनं वृद्धिस्तेनाकल्पिता धीर्यस्या इत्यर्थः ॥८५॥

अनु०—हे मुरारे! हमारी सखी राधा मधु धारावत् अविच्छिन्न आपके प्रेमानन्द में मग्न होकर, प्रगाढ़ भाव से आपका ही चिन्तन कर र के अतिशय प्रेमानन्द वश अपने को ही श्रीकृष्ण समझने लगी है और उसकी विरह संतप्त बुद्धि क्षण-क्षण नाना विरुद्ध कल्पना करती रहती है। उसके मन की वह पीड़ा, जिसका कोई भी प्रतीकार नहीं है और एक क्षण मात्र के लिए भी वह निवृत्त नहीं हो पाती है ॥८५॥

मुखोल्लास-दोहा

राधा विरह अगाध में, तन्मय गति ह्वै जात ।
हंस ताहि तुम कृष्ण सों, कहौ रसिक अवदात ॥८५॥

मूल की भाषा पद्य—छन्द गीतिका

हे कृष्ण ! काहू काल में मम सखी यह भोरी महा ।
अति हर्ष सों सुधि करत ऐसी ताहि मैं बरनौ कहा ॥
एहो मुरारी ! ह्वै इकाङ्गी कृष्ण मानति आप कौं ।
पुनि रटत राधा राधिका बिसरति न बिरहा ताप कौं ॥८५॥

सारांश—सोरठा

राधा कौ सन्ताप मिटत नहीं है एक पल ।
कृष्ण होत जब आप तब मानति राधा विरह ॥८५॥

◇◇◇◇

त्वया सन्तापानामुपरि परिमुक्तातिरभसा—
दिदानीमापेदे तदपि तव चेष्टां प्रियसखी ।
यदेषा कंसारे ! भिदुरहृदयं त्वामवयती
सतीनां मूर्द्धन्या भिदुरहृदयाभूदनुदिनम् ॥८६॥

टीका—उद्वेगात्यन्ततां वर्णयति त्वयेति । हे कंसारे ! त्वया रभसात् वेगात् इदानीं सन्तप्तानां दुःखानां उपरि यत्तदोर्नियतसम्बन्धात् यदपि यद्यपि परिमुक्ता प्रक्षिप्ता प्रियसखी तदपि तथापि तव चेष्टां आपदं प्राप्तवती, कुत इत्याह-यद्यस्मात् त्वां भिदुहृदयं भेदनशीलं हृदयं यस्तद्दृ-दयमितियावत् अवयती जानती अनुदिनं दिनं दिनं भिदुरहृदयाभूत्, एतेन प्रतिदिनमस्याः हृदयं विदीर्णं भवतीति ध्वनितम् । ननु मां तथाविधं वीक्ष्य किमिति स्वयं तथाभूदित्याह-सतीनां मूर्द्धन्या पतिव्रतानां श्रेष्ठा, पतिव्रतानार्य्यो हि स्वामिव्रतपरायणाः भवन्तीति, अत्रभिदुरशब्दः छले,

एतेन चाणिकप्रमा भवानिति भक्त्या ध्वनितम् । भवतीति हन: शतृ ॥८६॥

अनु०—हे कंसारे! यद्यपि आपने हमारी प्रिय-सखी को विरह ज्वालाओं में डाल रक्खा है, तथापि ऐसे महान् सन्तापोत्पादक दुःख के समय में भी विरहाधिक्य के कारण वह तुम्हारी लीलाओं का ही अनुकरण करती रहती है। कारण यह है कि तुम्हारे हृदय को कुलिश-कठोर जानकर वह भी अपने को वज्र-वत्-कठोर दशा में प्राप्त कर चुकी है। अर्थात् उसे देखकर यह नहीं समझा जाता कि उसके हृदय में प्राणस्पंदन है या नहीं! तुम्हारे विरह जनित गंभीर शोक में वह मृत-प्राय हो गई है। "यो यद्धर्म स एव सः" इस न्याय के अनुसार जो जिसका अनुकरण करता है वह उसी के स्वभाव का हो जाता है, यह लोक में प्रसिद्ध है। इस पद्य में 'भिदुर हृदयम्' इस पद से श्रीकृष्ण के हृदय की अत्यन्त कठोरता तथा प्रेम-शून्यता ध्वनित होती है एवं श्रीराधा के अन्तर्गूढ़ विरह शोक से कुलिश काठिन्यता ध्वनित होती है ॥८६॥

मुखोल्लास-दोहा

ललिता राधा प्रेम की, अद्भुत दशा जनाय।
श्री व्रज पति सों कहन हित, हँसहि रही सुनाय ॥८६॥

मूल की भाषा पद्य-छप्पय

अति सन्तापन माहिँ आप नेँ सखी हमारी।
करी त्याग श्री कृष्ण! तवै आकृति यह धारी॥
कृष्ण रूप ह्वै गयी कठिन जिमि हृदय तुम्हारौ।
ताही सरिस कठोर कियौ चित जग तैं न्यारौ॥
यह सतिन माँह संसार में अधिक शिरोमणि गुण मयी।
बनि एकांगी प्रभु प्रेम में वज्र हृदय राधा मयी॥८६॥

सारांश—सोरठा

जैसे आप कठोर तैसी ही राधा भयी।
साँचे लोचन कोर मिलत मिलें आकृति प्रकृति ॥८६॥

००००

समक्षं सर्वेषां विहरसि समाधिप्रणयिना-
मिति श्रुत्वा नूनं गुरुतरसमाधिं कलयति।
सदा कंसाराते! भजसि यमिनां नेत्रपदवी-
मिति व्यक्तं सज्जीभवति यममालम्बितुमपि ॥८७॥

टीका—ध्यानमुक्त्वा समाधिमाह समक्षमिति। प्रियसखीति पूर्व्वश्लोकादिहान्वेति। हे कंसाराते! सर्व्वेषां समाधिप्रणयिनां "समाधिर्ध्यातृध्येययोरैक्यं" तत् प्रणयिनां समाधियुक्तानामिति यावत्, समक्षं प्रत्यक्षं यथास्यात्तथा विहरसि इति श्रुत्वा नूनं गुरुतरसमाधिं कलयति करोति। तत्र अहमिति भेदाभावेन विलासादिसुखानुभावाभावात् उपायान्तरमनालोच्य मरणमेव इच्छतीति श्लेषेणाह सदेति-यमिनां योगीनां नेत्रपदवीं सदा भजसि इति हेतोः व्यक्तं, स्फुटं यथास्यात्तथा यममप्यालम्बितुं आश्रयितुं सज्जीभवति उद्यता भवति। यमं कालसंयमादिश्च। अथ च यमं शमनं आलम्बितुमित्यर्थः ॥८७॥

अनु०—हे कंसरिपो! समाधिपरायण योगिजनों के निकट आप प्रत्यक्ष भाव से प्रगट होते हैं, यह बात सुनकर राधा आजकल महान् योगाभ्यास करने लगी है एवं बाह्य इन्द्रिय संयमी मानवों को आप प्रत्यक्षरूप से नयन गोचर होते हो, इस कारण वह इन्द्रिय निग्रह करने में भले प्रकार प्रयत्न करती है। इससे प्रगट होता है कि वह और तो क्या यमराज अर्थात् काल को भी आलिंगन करने को उद्यत हो गई है ॥८७॥

मुखोल्लास-दोहा

सिद्ध पुरुष तांत्रिक भिषक, पूजे गिरिजा पाय।
हरि न मिले राधा तबै. करत योग चित लाय॥८७॥

मूल की भाषा पद्य—छप्पय

अहो कंस वध कर्त्ता कृष्ण ! सकल योगी जन।
जे समाधि प्रिय तीन के सन्मुख रहत सनातन॥
यह सुनि मेरी सखी राधिका थिर समाधि धरि।
बैठति किन्तु समाधिन के दृग पथ विहरत हरि॥
यह राधा चारु विचार करि संयमादि योगन करत।
शुभ दरस आप कौ होय प्रभु फल एकै यह चित धरत॥ ८७॥

सारांश-सोरठा

दृग पथ विहरत आप कृष्ण सदा योगीन के।
दरस मिलन जिय थाप राधा धरति समाधि थिर॥८७॥

◇◇◇◇

**मुरारे ! कालिन्दीसलिलचलदिन्दीवररुचे !**
**मुकुन्द ! श्रीवृन्दावनमदन ! वृन्दारकमणे ! ।**
**व्रजानन्दिन्नन्दीश्वरदयित ! नन्दात्मज ! हरे !**
**सदेति क्रन्दन्ती परिजनशुचं कन्दलयति ॥८८॥**

.का—अथ लज्जात्यागं वर्णयति मुरारे ! इति। अत्रापि पूर्वोक्तं सम
खीत्यन्वयेति। इत्यनेन प्रकारेण सदा क्रन्दन्ती इयं परिजनानां सखीन
ुचं शोकं कन्दलयति संवर्द्धयतीत्यर्थः। इति किं मुरारे ! कालिन्दी-
लिले पतत् यदिन्दीवरं नीलपद्मं तद्वत् रुचिः कान्ति यस्य तत
म्बोधनं, हे वृन्दावनमदन ! कन्दर्प हे वृन्दारकमणे ! देवश्रेष्ठ ! व्रजा-
न्दिन् ! व्रजजनानन्दकरणशील ! नन्दीश्वरः शिवः तस्य दयित प्रि
प्रियो यस्येति विग्रहो वा। हे नन्दपुत्र हे हरे इति क्रमेण ॥८८॥

अनु–हे मुरारे ! हे यमुना सलिल नीलेन्दीवर रुचे ! हे मुकुन्द ! हे वृन्दावन नव कन्दर्प ! हे इन्द्रनील–कान्ति मणे ! हे ब्रज जन आनन्द दाता ! हे नन्दीश्वर-प्रिय ! हे नन्दनन्दन ! हे सकल दुःख हारिन् ! सर्वदा इस तरह सम्बोधन पूर्वक आपके नामोच्चारण करती हुई, हमारी सखी राधा विलाप कर कर के क्रन्दन करती हुई अस्मदादि सखी वर्ग के शोक को बढ़ाती रहती है ॥८८॥

मुखोल्लास–दोहा

जपत रहत है राधिका, नाम ध्यान के संग।
हंस जाय के कृष्ण सों, कहिये सबै प्रसंग ॥८८॥

मूल की भाषा पद्य–छप्पय

नील कमल दल जमुना जल सँग आभा धारे।
तिन समान शुचि रुचि अंगन की शोभा वारे ॥
अहो मुरारे ! मुक्ति देन हारे ! ब्रज सुख प्रद।
वृन्दावन के मदन ! देव वृन्दारक मणि मद ॥
हे नन्दलाल ! शिव-परम प्रिय ! हे हरि ! कहि रोदन करति।
तथा रुवावति सखिन को इमि राधा दिन प्रति आचरति॥८८॥

सारांश–सोरठा

मलिन वदन बहु बार जपत नाम रोदन करत।
सखियन शोक अपार होत निरखि राधा दशा ॥८८॥

००५०

समन्तादुत्तप्तस्तव विरहदावाग्निशिखया
कृतोद्वेगः पञ्चाशुगमृगयुवेधव्यतिकरैः।
तनूभूतं सद्यस्तनुवनमिदं हास्यति हरे ?
हठादद्य श्वो वा मम सहचरी-प्राणहरिणः ॥८९॥

टीका—तव विरहवशादियं मरिष्यतीत्याह समन्तादित्यादि। हे हरे! अद्य श्वो वा मम सहचरीप्राणहरिणः प्राण एव हरिणोऽतिवेगावहत्वात् वलादिदं तनुवनं सद्यः अतिझटिति हास्यति त्यक्ष्यति। त्यागकारणमाह-तव विरहदावाग्निशिखया तव विरह एव दावाग्निः वनवह्निस्तस्य शिखया समन्तात् सर्व्वत्र उपतप्तः विरहानलस्य कुत्रापि निर्व्वाणाभावात्। पुनः कीदृक् पञ्चाशुगेति-पञ्चाशुगः कामः स एव मृगयुर्व्याधः तस्य ये वेधाः व्यतिकरास्तैः कृतोद्वेगः कृत उद्वेगो यस्य सः, वनं कीदृशं तनुभूतां अतिक्षीणं अन्योऽपि हरिणः सर्व्वत्रातिव्यापकवनाग्निना तप्तः पञ्चा अतिविस्तीर्णा आशुगाघाता यस्य एवम्भूतस्य व्याधस्य वेधनिवहनात्यल्पीभूतं वनं हठात् सद्यो जहातीति ध्वनिः। अत्र श्लोके अद्य श्वो वेति विशेषोक्त्या सद्य इति निरर्थक मित्यत्राह-हठात् सद्यस्तत्क्षणमेव अद्येति अस्मिन्नहनि श्वः परदिने वा इति वाच्यन्यायम्। "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि स" इत्यमरः "सद्यः सपदि तत्क्षणे" इति अनागते श्वः इति च ॥८६॥

अनु—हे हरे! तुम्हारे विरह दावाग्नि की शिखा से चहुँओर से सन्तप्त हुआ तथा मदन रूप व्याध के वाण समूह के आघात से पीडित हुआ, हमारी सखी राधा का यह प्राण रूप हरिण सहसा, आज नहीं तो कल उसके अतिक्षीण तनरूप वन को परित्याग कर देगा। अतः यदि उसके दर्शन की आपको अभिलाषा है तो शीघ्र ही यहां आगमन करें ॥८६॥

मुखोल्लास—दोहा

अति वियोग तें जो बढ्यौ, राधा के तन खेद।
हंस जाय तुम कृष्ण सों, कहौ यथारथ भेद ॥८६॥

मूल की भाषा पद्य—छन्द रोला

हे हरि! मेरी सखि राधा कौ प्राण हरिण सम।
लघु वन देह लगी दवाग्नि तव विरह दुरागम ॥

तहाँ वधिक सम पंचबाण दुख दैन उमाहत ।
हठ करि भय बस आज कालि सो निकसन चाहत ।।८६।।

सारांश-सोरठा

राधाजी के प्रान कृष्ण तुम्हारे विरह में ।
चाहत करन पयान आय वेग सुधि लीजिये ।।८६।।

०००० 

पयोराशिस्फीतत्विषि हिमकरोत्तंसमधुरे
दधाने दृग्भङ्ग्या स्मरविजयिरूपं मम सखी ।
हरे दत्तस्वान्ता भवति तदिमां किं प्रभवति
स्मरो हन्तुं किन्तु व्यथयति भवानेव कुतुकी ।।६०।।

टीका—कन्दर्पस्य भयजननाय शिवस्य ध्यानपरेयमिदानीमिति कथयति पय इति । इयं मम सखी हरे शिवे दत्तस्वान्ता निरुद्धचित्ता, कीदृशी स्मरविजयिनः शिवस्य रूपं दधाना, यो भक्तो भवति स तदनुकारिवेशं गृह्णाति च, स्मरतापापनोदनाय चन्दनानुलेपनादिना फणिभूषण-भस्माङ्गरागयुक्तशिवत्वादरयं, कीदृक् भङ्ग्या उपलक्षितं अयमभिप्रायः-भ्रूभङ्ग्या हरेण कामो भस्मीकृतः, अतोऽहमपि तथा करोमीति । हरे कीदृशे पयोराशिस्फीतत्विषि पयोराशिः दुग्धसमूहः क्षीरसमुद्र इति यावत् तद्वत् स्फीता अतिबहुला कान्ति र्यस्य तस्मिन् , पुनः कीदृशे हिमेति हिमकरश्चन्द्रः स एव उत्तंसो शिरोभूषणं तेन मधुरे सुन्दरे, एवम्भूता यतत् तस्मात् इमां राधां हन्तुं स्मरः किं प्रभवति नैवेत्यर्थः, स्वजेतृशिवरूपत्वात् किन्तु कुतुकी सन् भवानेव व्यथयति वधं करोति । अथ च हेतवे मम सखी भवति त्वयि दत्तस्वान्ता स्मरविजयिरूपं दधानेति विशेषणेन अतिविरहानलव्याकुला तन्निवारणाय मृणालादिधारण-युक्तम् । यथा जयदेवो—"विहितविशदबिसकिशलयवलयेति" । त्वयि

कीदृशे पय इति पयोराशिरिति योग्यतया यमुनाजलसमूहो श्रेयः। अतिश्यामत्वात् तद्वत् स्फीतार्थिष पयोराशिः पुञ्जीभूतवनं यस्मात् स मेघ इत्यर्थः ॥६०॥

अनु०—हमारी प्रिय सखी राधा अपने मन को, दुग्ध-राशि समान धवल काय उन चन्द्रचूड श्री-शंकर में, जिन्होंने अपने ललाट के तृतीय नेत्र से मदन को भस्मीभूत किया था, समर्पण कर चुकी है, अर्थात् उनका ध्यान करने लगी है। अतः कामदेव अब हमारी सखी पर शराघात करने को समर्थ नहीं है। किन्तु कौतुकी आप हमारी सखी श्रीराधा के प्राणों को विरहवारिधि में मग्न कर कर के उनके जीवन से खेला करते रहते हैं अर्थात् तुम ही उसको विशेष पीड़ा दे रहे हो। तात्पर्य यह कि, अप्राकृतिक मदन के अतिरिक्त उसको कोई पीड़ा नहीं दे सकता है ॥६०॥

मुखोल्लास-दोहा

अब लो राधा देह में, विद्यमान हैं प्राण।
करति सूचना कृष्ण प्रति, ललिता प्रकट प्रमाण ॥६०॥

मूल की भाषा पद्य—छप्पय

हे हरि ! हे श्री कृष्ण ! सखी राधा मेरी जग।
जीतन हारी मदन पराक्रम निज कटाक्ष दृग ॥
धारैं ऐसौ रूप बढ़े घन पटल समद्भुत।
राजति कान्ति शरीर मोर दाभूषन युत ॥
मन दीन्हे तुम छवि पै रहै ताहि काम वध सकत का।
नहिं कदापि, पै आप ही करत खिलारी यह व्यथा ॥६०॥

सारांश—सोरठा

अपने रूप नवीन जीतत हैं जो का को।
ता पर हू लयलीन रहत आप में राधिका ॥६०॥

विजानीषे भावं पशुपरमणीनां यदुमणे !
न जानीमः कस्मात्तदपि बत मायां रचयसि ।
समन्तादध्यात्मं यदिह पवनव्याधिरलपद्
बलादस्यास्तेन व्यसनकुलमेव द्विगुणितम् ॥६१॥

टीका—नन्द्धवद्वारा सा या शिक्षिता तेनाध्यात्मयोगेनैव सर्वत्र मां पश्यन्तीति किमिति विरहोपशमनं न करोति चेत्तत्राह-विजानीषे इति । पशुपरमणीनां गोपीनां भावमभिप्रायक्रीडाकौतुकानुरूपं त्वं विजानीषे, हे यदुमणे ! बत खेदे तदपि तथापि किमर्थं मायां कपटं आध्यात्म्याद्युपदेशरूपं रचयसीति न जानीमः । अनवरतत्यागादिरूपसुखमिच्छतीनां योगोपदेशः मायैवेत्यर्थः, पवनव्याधिरुद्धवः इह व्रजे यदध्यात्मं अलपत् कथितवान् तेन हेतुना अस्या राधायाः समन्तात् सर्वतः व्यसनकुलं सन्तापसमूहः द्विगुणितम् । तदुपदेशप्रकारेण तव भावनपूर्वानुभूति विना संस्मरणाद्विरहवेदनाया उज्जृम्भमाणत्वात् । "माया दम्भे कृपायाञ्च" ॥६१॥

अनु०—हे यदुपते ! गोप-सुन्दरियों के हृदय का अभिप्राय तुम भली भाँति जानने वाले हो, अर्थात् तुम्हारा ब्रज में आगमन ही उन्हें अभीष्ट है, फिर न जाने क्यों तुम कपटावलम्बन कर रहे हो । तुम्हारा भेजा हुआ दूत उद्धव, जिसके द्वारा आपने हमको ज्ञानामृत भेजा था वह विस्तारपूर्वक 'परमात्म तत्त्व' का उपदेश सुनाकर श्रीराधा की विरह व्यथा को शान्त करना तो दूर रहा उलटा वेगवती कर गया है । ब्रज-सुन्दरियों ने कुरुक्षेत्र मिलनावसर पर कहा भी है कि—आपने जो चरण-ध्यान करने का उपदेश किया है, वह तो संसार-सिन्धु के उद्धार का साधन है, न कि विरह-सागर में तड़पते जनों के उद्धार का ॥६१॥

मुखोल्लास—दोहा

विरह व्यथा बाधति तनहि, सो हंसहि समझाय।
ललिता राधा की दशा, वरनत अति बिलखाय॥६१॥

मूल की भाषा पद्य-छन्द रौला

हे यदुमणि श्री कृष्ण ! भाव गोपिन के जानत।
तुम जो माया रचत हम न ताकों पहचानत॥
हे परमात्मन् राधा बहु विधि बात न्याव सों।
बातुल पच्ची सरिस पुकारत दुख अगाध सों॥६१॥

सारांश—सोरठा

राधा करत विलाप बातुल पच्छी की सरिस।
होत विविध सन्ताप कृष्ण आप के विरह में॥६१॥

◇◇◇◇

गुरोरन्तेवासी स भजति यदूनां सचिवतां
सखीयं कालिन्दी किल भवति कालस्य भगिनी।
भवेदन्यः को वा नरपतिपुरे मत्परिचितो
दशामस्याः शंसन् यदुतिलक ! यस्त्वामनुनयेत्॥६२॥

टीका—ननु यद्याध्यात्मशिक्षया विरहवेदना द्विगुणयं भवति तर्हि किमिति निर्वेदन्तं मयि प्रेरितवत्यसीति चेत्तत्राह गुरोरिति। यो गुरोरन्तेवासी बृहस्पतिशिष्य उद्धवः स यदूनां सचिवतां सहायतां भजति, अतोऽस्मदर्थे कथयित्वा कथं निजकुलमङ्गलरूपं भवन्तं अत्र प्रेरयिष्यतीति भावः। यद्वा मङ्गलसचिवत्वात् क्षणमप्यन्यत्र गन्तुमशक्तः कुतोऽस्माभिः सह दर्शनं यत् स्ववार्त्ता ब्रूम इति। ननु अविच्छिन्नप्रवाहा यमुना अस्तीति चेत्तत्राह—इयं कालिन्दी सखी सहनिवासिनीत्वात् किल निश्चितं कालस्य यमस्य भगिनी भवति अतो निर्दया, यमः प्रेताधि-

पतित्वात् सततं जनमरणप्रियस्तद्भगिनीत्वादियमस्मन्मरणान्वेषणी कथमस्मज्जीवनहेतुं त्वयि वार्त्तां कथयत्विति भावः । नरपतिपुरे राज्ञः पुरे अन्यः को वा मत्परिचितो भवेत् नास्तीत्यर्थः । नरपतिपुरत्वादन्येषां दूषणावेशत्वमुक्तम् । हे यदुतिलक ! अस्या राधायाः दशामवस्थां शंसन् कथयन् यस्त्वामनुनयेत् प्रसादयेत् । एतादृक् कोऽन्यो भवेदिति सम्बन्धः ॥६२॥

अनु०—हे यदुकुल भूषण ! बृहस्पति जी का शिष्य वह उद्धव, जोकि अब यादवों का मन्त्री पद प्राप्त कर चुका है और वह सखी यमुना भी तो यमराज की भगिनी है, अतः अब वह भी निर्दय हो गई है ! ये दोनों उद्धव तथा यमुना हमारे परिचित होने पर भी इनमें से कोई हमारे दुःख की कहानी आपको नहीं सुनाता ? अब इनसे अधिक मधुपुरी में कोई हमारा परिचित जन भी तो नहीं है जो हमारी सखी की दिव्योन्मादमयी विरह दशा, विनय पूर्वक निवेदन कर आपसे वृन्दावन आगमन की प्रार्थना करे ? अतएव इस हंस को दूत बनाकर भेजने के सिवाय कोई उपाय दिखाई नहीं पड़ता है ॥६२॥

मुखोल्लास–दोहा

विरह दशा जैसी करी, राधा की अति दीन ।
कौन कहै श्रीकृष्ण सों, तुम बिन हंस प्रवीन ॥६२॥

मूल की भाषा–रोला छन्द

उद्धव सुरगुरु शिष्य सचिव यदुकुल के जानिय ।
यमुना सखी हमारी यम की बहन प्रमानिय ॥
और कौन मथुरा में जाकौं जानत हैं हम ।
हे यदु तिलक सँदेस सुनावहि आपहि करि श्रम ॥६२॥

सारांश-सोरठा

परिचित मथुरा माहिँ उद्धव कालिन्दी बिना।
आन पुरुष कोउ नाहिँ जो वह कहै वियोग दुख ॥६२॥

००००

विशीर्णाङ्गीमन्तर्व्रणविलुठनादुत्कलिकया
परीतां भूयस्या सततमपरागव्यतिकराम्।
परिध्वस्तामोदां विरमितसमस्तालिकुतुकां
विधो! पादस्पर्शादपि सुखय राधा-कुमुदिनीम् ॥६३॥

टीका—त्वां विना चन्द्ररहितायाः कुमुदिन्या दशामियं प्राप्तेति श्लेषेणाह विशीर्णाङ्गीमिति। हे विधो! हे विष्णो! पक्षे चन्द्रपादस्पर्शादपि आस्तां क्रीडाकौतुकमाधुर्य्यदानं चरणस्पर्शादपि राधाकुमुदिनीं तां राधैव कुमुदिनी तां सुखय, पक्षे-पादः किरणः तत्स्पर्शनात् तद्दानात् राधैवकुमुदिनीति समासः तदेकतानत्वादुभयोः साम्यमुभयपक्षानुकूलानि विशेषणान्याह, कीदृशीं अन्तर्व्रणविलुठनात् अन्तरभ्यन्तरे व्रणः वेदना तेन विलुठनं पतनं तस्मात् विशीर्णाङ्गी विशीर्णानि विरहज्वरतया अवशानि करचरणादीनि यस्याः, तथा च भरतः—"अङ्गं विरहसन्तप्तं यत्र कुत्रापि मुञ्चतीति"। पक्षे-विगलितानि विविक्तानि अङ्गानि दलानि यस्याः, पुनः कीदृशीं भूयस्या अति प्रचुरतया उत्कलिकया उत्कण्ठया परीतां व्याप्तां युक्तामिति यावत्। पक्षे—उत्कलिका उद्गता भूयसी या कलिका तया, इन्दुदर्शनं विना कुमुदिनीनां विकाशाभावात्। पुनः कीदृशीं सततं सर्वदा उपरागः कुत्सितो यो रागो रमणादीच्छा तस्य व्यतिकरः व्यतिसङ्गः सङ्गमो यस्याः, यद्वा उपरागेण व्यतिकरोऽधरचरणादीनां लौहित्यं यस्याः, विरहवेदनया मालिन्या, पक्षे—विद्यमानः परागव्यतिकरः रजः संसर्गो यस्याः तां, पुनः कीदृशीं परिध्वस्तः दूरीभूतः आ सर्व्वतो भावेन मोदो हर्षो यस्याः, पक्षे-आमोदोऽलिनिहारी-

गन्धः विशीर्णपुष्पत्वात्, पुनः कीदृशीं विरमितं समस्तानां आलीनां सखीनां कुतुकं कौतुकं यया तां, पक्षे—विरमितसमस्तभ्रमरकौतुकां मकरन्दाभावात् ॥६२॥

अनु०—हे गोकुलचन्द्र ! यह श्रीराधा अन्तर्गूढ़ विरह जनित से सन्ताप के कारण भूमि में लोटती रहने से इसका देह अत्यन्त क्षीण होचला है एवं उत्कण्ठा महान् दीख पड़ती है। प्रगाढ़ विरह निबन्धन द्वारा सकल वस्तुओं से विराग हो चुका है, अंग-कान्ति मलिन सी हो चुकी है, अब उसकी अङ्गशोभा पहले की भांति कनक समान गौर नहीं दिखलाई पड़ती, उसका अब आनन्द विलीन हो गया है। सखियां के साथ के हास्य-कौतुक को भूल चुकी है। ऐसी दशा में निज सुधा-किरण के स्पर्श द्वारा इस राधा-कुमुदिनी को सुखी कीजिये। कुमुदिनी पक्ष में—हे चन्द्र ! जो अन्तर्गत कीटादिक्षत द्वारा अत्यन्त म्लान होचुकी है, जो तरङ्गाघात से बार २ आन्दोलित होती रहती है, जिसका वर्ण, ( प्रभा ) एवं सौरभ विदूर हो चुका है एवं सूखी सी हो जाने के कारण जिसे भ्रमरगण ने भी त्याग दिया है उस कुमुदिनी को निज किरणों का स्पर्श करके सुखी कीजिये ॥६२॥

### सुखोल्लास-दोहा

हंस कहौ तुम कृष्ण सों, विरह व्यथा की पीर।
तुम बिन राधा रैन दिन, व्याकुल महा अधीर ॥६२॥

### मूल की भाषा पद्य—छन्द घनाक्षरी

कुमुदिन राधा कों हैं आप कृष्ण ! चन्द्र सम,
दरस पद आप को किरण समान है।
जल माहिँ नलिनी की लता पाँति फैली रहैं,
तैसे वन माहिँ राधा विकल अपान है ॥

मुरझाने फूल सबै जैसे वाके दरसत,
राधा की मोद रहित तन मुरझान है।
जात रहे कैरव सों अलिन के दृश्य तैसे,
राधा की सखिन तज्यौ कौतुक विधान है॥६३॥

सारांश—सोरठा

करी विरह के ताप देह दशा दुर्बल महा।
निस दिन करत विलाप लोटति राधा धरनि तल॥६३॥

◇◇◇◇

विपत्तिभ्यः प्राणान् कथमपि भवत्सङ्गमसुख-
स्पृहाधीना शौरे ! मम सहचरी रक्षितवती।
अति क्रान्ते सम्प्रत्यवधिदिवसे जीवनविधौ
हताशा निःशङ्कं वितरति दृशौ चूतमुकुले॥६४॥

टीका—भवदागमनप्रत्याशया एतावन्तं कालमनैषीदिदानीं निराशेयं याला इत्याह विपत्तिभ्य इति। हे सौरे ! मम सहचरी सखी भवत्सङ्गम-स्पृहा तदधीना विपत्तिभ्यः कथमपि प्राणान् रक्षितवती, सम्प्रति इदानी-मवधिदिवसे आगमनसङ्केते तद्दिवसे अतिक्रान्ते सति जीवनविधौ हताशा सती निःशङ्कं यथास्यात्तथा दृशौ चूतमुकुले वितरति ददाति। अयम्भावः—तावन्तं कालं चूतमुकुलावलोकनादुद्वेगातिशयेन प्राणाः कदाचिद् यदि गच्छन्ति तदा भवत्सङ्गमसुखं न संभविष्यतीति शङ्कया चूतमुकुलानि नालोकितवती, इदानीं तत्र निराशत्वात् निःशङ्कं निरीक्ष्यते, एतेन विरहस्यातिधार्ष्ट्यता चोक्ता॥६४॥

अनु०—हे शूर-कुलोद्भव ! (इस संबोधन से क्षत्रियोचित कुटिलता तथा क्रूरता ध्वनित होती है) हमारी सहचरी राधा, तुम्हारे मिलन की आशा से अधीन हो, बड़ी कठिनता से अपने

वहिर्गत प्राणों की रक्षा कर रही है। किन्तु जिस अवधि पर तुम व्रज में लौट आने की प्रतिज्ञा करके गए थे उसके व्यतीत हो जाने पर हमारी सखी अब जीवन धारण में हताश होकर निर्भयता पूर्वक आम्र मुकुल पर दृष्टि डालती रहती है। प्रथम तुम्हारी मिलन आशा से किसी प्रकार प्राण धारण कर रही थी, अब निराश हो चुकी है अतः शीघ्र प्राण प्रयाण कर जावें इसी कारण वसन्त के आम्र मुकुल का निरीक्षण कर रही है। अब उसे प्राण धारण की साध नहीं रही है अतः निर्भय हो आम्र मुकुल का दर्शन कर रही है। अब अधिक श्रीकृष्ण की स्मृति उद्दीपित हो दुःख न दे सके और वह मरण को प्राप्त हो जावे। पहले तो वह उद्दीपक वस्तु देख नयन मूंद लेती थी अब उसे जीवन की साध नहीं है, अतः आप व्रज में शीघ्र आगमन करें ॥६४॥

मुखोल्लास-दोहा

राधा बाधा हरन कौ, कृष्ण दरस उपचार।
हंस कहौ तुम जाय के, सकल कथन कौ सार ॥६४॥

मूल की भाषा पद्य-छप्पय

शूर तनय श्री कृष्ण! सखी मेरी राधा यहि।
आप मिलन हित प्राण बचाये घोर विपति सहि ॥
सुख कौ हेतु विचारि सबै विधि दरस तुम्हारौ।
मिलन दिवस की आस किये ताकि रही सहारौ ॥
दै रही रसालन बौर में दीठि पीठि जग सों दिये।
अति ही निराश शंका रहित प्राण तजन कौ प्रण किये॥६४॥

सारांश-सोरठा

किये दरस की आस अब लों यह जीवत रही।
सब विधि होय निरास राधा तन तजिनौ चहै ॥६४॥

००००

प्रतीकारारम्भश्लथमतिभिरुद्यत्परिणते-
र्विमुक्ताया व्यक्तस्मरकदनभाजः परिजनैः ।
अमुञ्चन्ती सङ्गं कुवलयदृशः केवलमसौ
बलादद्य प्राणानवति भवदाशा-सहचरी ॥६५॥

टीका—दशमीदशां वर्णयति प्रतिकारेत्यादि । कुवलयदृशो राधाया असौ भवदाशासहचरी भवत् प्राप्तिवाञ्छैव सखी केवलं बलात् प्रकुलत्वेन प्राणान् अवति रक्षति, अस्या इति पाठः, कीदृश्याः परिजनैः विमुक्तायाः, कीदृशैः प्रतिकारस्य विरहज्वरोपशमनोपायस्य य आरम्भस्तत्र श्लथा व्यापारशून्या मतिर्येषां अचिकित्स्यत्वात्, कीदृश्याः उद्यत् परिणतेः उद्भवन्ती परिणतिरन्तिमभावावस्था यस्याः, व्यक्तं यत् स्मरकदनं कामग्लानिस्तद्भजति, भवदाशासहचरी कीदृशी सङ्गं आसक्तिं अमुञ्चन्ती, एतेन भवदाशैव जीवनहेतुरित्युक्तम् । अनेन चिरजीवित्वमस्य विरहिण्याः ध्वनितम् । यत उक्तं—"पुनः पुनः प्रवर्त्तन्ते निवर्त्तन्ते पुनः पुनः । अवस्था हृदये यूनो वेतस्च चिरजीवितेति"। अन्यमपि औषधादि-निरसाध्यव्याधि बालकमरणं बुद्ध्या बन्धुभिस्त्यक्तमपि आशा न त्यजतीति ध्वनिः ॥६५॥

अनु०—हे कृष्ण ! आपके आगमन की आशा ही जिसकी सह-चरी है, ऐसी यह कमल नयना 'राधा' जैसा कि वह आपके प्रेम में पीड़ित हो रही है, सर्वथा उसके अयोग्य है, भूमि पर शयन कर रही है तथा अब इसकी अन्तिमावस्था (दशवीं दशा) अति निकट है और सहचरी वर्ग उसकी पीड़ा दूर करने के उपायों का भी त्याग कर चुका है तो भी आपकी आगमन आशा रूप सह-चरी इसका साथ नहीं छोड़ती और उसके बहिर्गमनोन्मुख प्राणों को बलपूर्वक धारण कर रही है। इसीलिए श्रीराधा कल जीवित रह सकेगी इतने सोच-विचार का समय भी न लगाते हुए आप शीघ्र ही वृन्दावन आगमन करें ॥६५॥

मुखोल्लास–दोहा

हंस कहौ श्री कृष्ण सों, राधा दुख परिणाम ।
चाहत प्राण पयान कों, ठहरे अधरन धाम ॥९५॥

मूल की भाषा पद्य–छप्पय

अहो कृष्ण ! राधा जो कमल लोचननि वारी ।
तज्यौ न केवल संग सखी यह आस तिहारी ॥
सो अब लौं करि रही प्राण रच्छा है ताकी ।
रोग निवारण माहिँ अन्य सखियन मति थाकी ॥
पुनि वहै त्यागि ताकों गईं जानि मृत्यु आई निकट ।
बचि गई मरन तें पै सहत अब मनसिज पीड़ा प्रकट ॥९५॥

सारांश–सोरठा

अवै त्यागती देह राधा व्यथित वियोग रुज ।
पूरित परम सनेह दीप शिखा लौं दिपत तन ॥९५॥

०००० 

अये रासक्रीडारसिक ! मम सख्यां नवनवा
पुरा बद्धा येन प्रणयलहरी हन्त गहना ।
स चेन्मुक्तापेक्षस्त्वमसि धिगिमां तूलशकलं
यदेतस्याः नासानिहितमिदमद्यापि चलति ॥९६॥

टीका––भवदपेक्षया तस्याः जीवनं निन्दितमेवेत्यत आह अय इति । अये इति सकोपसम्बोधनं विषादे वा, हे रासक्रीडारसिक ! मम सख्यां येन अर्थात्त्वया पुरा पूर्वं नव-नवा प्रतीक्षणं नूतना प्रणयलहरी प्रेम-तरङ्गः बद्धा जनिता स चेन्मुक्तापेक्षस्त्यक्तापेक्षः स त्वमसि भवसि हन्त खेदे तदा इमां राधां धिक् कुत इत्यत आह यदिति यद्यस्मात् एतस्याः नासा-निहितं जीवति न वा इति ज्ञातुं नासाग्रेऽर्पितं इदं तूलसकलं तूलखण्डं

अद्यापि चलति, अयं भावः त्वयि सा प्रेम्णि सति यदि जीवति तर्हि सकलमेव जीवनं,त्वयि तु निरपेक्षे भवदाशया जीवति तत् एतस्या गर्हितमेवेति, कीदृशी प्रणयलहरी गहना निविडा अन्यापि प्रणयलहरी गहना अगम्या भवति अथ च गहनैव सदा, इदानीमपि सदा शमति क्लेशेन जीवनधारणात् ।"गहनं काननदुर्गेषु गात्रेषु च नपुंसकम् । गहनं स्यात् दुःखकाननयोरपीति" मेदिनी । "तूलं स्याद्ब्रह्म-दारुणि-आकाशे च पिठे न स्त्रीति" स्थलेऽति प्रसिद्धः ॥६६॥

अनु०—हे रास-रसिक ! पहले पहले आपही ने तो हमारी सखी,राधा के साथ नित्य नवीन अनुराग उत्पन्न कर उसे दुर्गम प्रेम-लहर में बाँधा था, अब भी यदि तुम उसे बचाना चाहते हो, किन्तु आप तो अब भी उसकी पर्वाह नहीं करते । इससे उदासीनता ध्वनित होती है । ऐसी हमारी सखी को धिक्कार है कि अब इस दशा में भी वह आपकी अपेक्षा करती रहती है । किन्तु अब भी उसके देह में प्राण हैं कि नहीं, यह जानने के लिए जब हम लोग इसके नासारन्ध्रों के सन्मुख रुई के टुकड़े ( तूल शकल ) लगाते हैं तो वह अद्यापि चलते हैं अर्थात् वह अभी तक प्राण धारण किए हुए है ! तात्पर्य यह है कि तुम्हारे उदासीन रहने से अब उसके जीवन धारण के कोई लक्षण नहीं प्रतीत होते हैं । इससे हम तो उसके भाग्य की ही निन्दा करती हैं कि ऐसे समय पर भी उसके तन से प्राण वहिर्गत नहीं होते ? इस स्थान पर श्रीराधिकाजी के भाग्य को धिक्कारने के छल से उसका एक निष्ठ प्रगाढ़-प्रेम ही सूचित होता है ॥६६॥

मुखोल्लास—दोहा

होत दशा प्राणीनं की, प्राण तजन की बार ।
सो राधा की कृष्ण सों, कहौ हंस निरधार ॥६६॥

मूल की भाषा पद्य-छन्द गीतिका

हे रास क्रीड़ा में रसिक श्री कृष्ण ! तुम मम सहचरी।
अति प्रेम डोरी माहिँ पहले बाँधि पुनि त्यागन करी॥
धिक्कार ऐसे नेह पै अब तजत सो निज प्रान है।
धरि नासिका आगे रुई तब होत श्वासा ज्ञान है॥६६॥

सारांश—सोरठा

राखे राधा प्रान केवल दर्शन लालसा।
जीवन को अनुमान होत तूल नासाग्र धरि॥६६॥

००००

**मुकुन्द ! भ्रान्ताक्षी किमपि हृदि सङ्कल्पितशतं**
**विधत्ते तद्वक्तुं जगति मनुजः कः प्रभवति।**
**कदाचित् कल्याणी विलपति यदुत्कण्ठितमति-**
**स्तदाख्यामि स्वामिन् ! गमय मकरोत्तंसपदवीम्॥६७**

टीका—इदानीं राधाया उन्मादंदशां वक्तुं प्रक्रममाणः स्फुटं यत् प्रलपति तत् प्रस्तौति मुकुन्देति। हे मुकुन्द ! इयं भ्रान्ताक्षी चञ्चलाक्षी अथ च प्राणविगमसहितदशोक्ता, यतस्तदानीं तव न लोचनपातो जलो भवति यत् किमपि असङ्कल्पितशतं विरोधेन विरुद्धता च असम्भवात् विरुद्धं सङ्कल्पशतं विधत्ते तद्वक्तुं जगति कः प्रभवति कोऽपि नेत्यर्थः। मनोगतस्य ज्ञातुमशक्यत्वात्, यद्वा निधानार्थोऽशब्दः तद्वक्तुं जगति कोऽपि न प्रभवति, संकल्पानां प्रतिक्षणजायमाने हेतानियतत्वात् शत-शब्दोऽयं संख्यार्थे पर्यवस्यति, किन्तु इयं कल्याणी उत्कण्ठितमतिः सती कदाचित् यद्विलपति तत् आख्यामि, कथयामि हे स्वामिन् ! मकरोत्तंसपदवीं कर्णपथं गमय प्रापय शृणु इति यावत्। मकरौ मकराकृतिकुण्डले उत्तंसे यस्य स, कल्याणीति जीवनसंशयवत्या स्फुटवाङ्निर्गमेन कल्याण्योक्तत्॥६७॥

नु०—दशमी दशा के अन्तर्गत सचेतना श्रीराधा के विलाप को र्णन करते हुए कहते हैं—हे मथुरानाथ मुकुन्द ! दिव्योन्माद मते हुए नयनों वाली हमारी सखी श्रीराधा, मानस-संकल्पों के ो अगोचर जो-जो कुछ करती रहती हैं, संसार का कोई भी नुष्य उसे वर्णन करने की सामर्थ्य नहीं रखता। जब कि अत्यन्त दूवेग वश उसकी बुद्धि चञ्चल हो उठती है, तब वह किस तरह लाप करने लगती है आप उसे भी श्रवण कर लीजिये ॥६७॥

मुखोल्लास-दोहा

ललिता करत मराल कौं, सूचित विविध प्रकार।
कृष्ण दरस की लालसा, राधा कौ आधार ॥६७॥

मूल की भाषा पद्य—छन्द गीतिका

हे मुक्ति दाता ! चलित दृग राधा करत सौ कल्पना।
नहिं बनत वरनत दशा का करि सकत कोऊ जल्पना ॥
हे स्वामि ! हे कृत मकर भूषण ! मिलन इच्छा मति किये।
जिहि भाँति कल्याणी विलपति कहत मैं सुन लीजिये ॥६७॥

सारांश—सोरठा

विविधि भाँति सन्ताप दर्शन उत्कण्ठा हिये।
राधा करत विलाप सुनिये कृष्ण कृपा यतन ॥६७॥



अभूत् कोऽपि प्रेमा मयि मुररिपो यः सखि ! पुरा
परां धर्मापेक्षामपि तदवलम्बादलङ्घयम्।
तथेदानीं हा धिक् समजनि तटस्थः स्फुटमसौ
भजे लज्जां येन क्षणमिह पुनर्जीवितुमपि ॥६८॥

टीका—विशेषमनालोच्य श्रीकृष्णे ममानुरागो लज्जाय वाभूदित्याह अभूदिति । हे सखे ! मुररिपोः श्रीकृष्णस्य, पुरा पूर्व्वोत्कृष्टामपि धर्म्मापेक्षां अलङ्घयं तदवलम्बाद्दूर-कुल धर्म्मादिकं परित्याज्य तदेकतानत्वात् । हा हेति खेदे, धिगिति कुत्सायां, इदानीं तथा तेन रूपेण तटस्थ उपहासः समजनि जातः येन उपहासेन स्फुटं व्यक्तं अहं अस्मिन्नवसरे पुनरनवधारणे क्षणं जीवतुमपि लज्जां भेजे प्राप्नोमि । तस्मादीदृगुपहासास्पदं, तथा चोक्तं—"सहसा विदधीत न क्रियामविवेकः परमापदांपदमित्यादि" । यद्वा तटस्थो शब्दो लाक्षणिकः अर्थ-मर्य्यादया जनवृन्दे वर्त्तते, तथातिवृद्धो नद्याः जलौघः तटस्थः सन् तत्रस्थवृक्षादिकं दूरीकृत्य सर्व्वत्र प्रकटीभूय स्वयं झटित्येवापगमात् मम मत्त अयमत्र वातितिष्ठेदिति, प्रेम्णा विशेषणं तटस्थ इति, किञ्च लोके हि तटस्थशब्देन हठात् कृतकार्य्यः पश्चात् चमत्कारमापन्नो जन उच्यते अत्र लक्षणया तद्धर्म्म उच्यते । "धर्म्मोऽस्त्री पुण्य-आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषत् न्याये धनुर्यमसोमपयोरिति" मेदिनी । अलघयमिति नाम निङ्न्तात् लघुशब्दात् लुङ् उत्तमपुरुषः ॥४८॥

अनु०—हे सखि, व्रज-वास के समय मेरे प्रति श्रीकृष्णचन्द्र का एक अनिर्वचनीय प्रेम उत्पन्न हुआ था, उसके लालच में आकर मैंने अपने लोक-मर्यादा रूप धर्म की भी पर्वाह नहीं की थी । उस समय ऐसा प्रगाढ प्रेम था, किन्तु इस समय स्पष्ट रूप से उसके विपरीत उदासीनता प्रतीत होती है, इसी कारण इस वृन्दावन में क्षणमात्र भी जीवन धारण करते रह कर अब मुझे लज्जा प्रतीत होती है । अर्थात्-आसन्न मृत्यु दशा के कुछ क्षण पूर्व उसका सांसारिक ज्ञान तिरोहित हो गया था, इसी कारण वाह्य दशा में आत्मधिक्कार ही दीख पड़ती है । जो कि, एक दिन वृन्दावन में श्रीकृष्णचन्द्र की परमादरणीया के रूप में वरण की जा चुकी थी, अब उसी स्थान पर वहीं भिखारिणी होकर दुर्भाग्य की चरम

ा को प्राप्त हो चुकी है। इसी कारण अब और भी श्रीकृष्ण
ा उपेक्षित हो कर जीवन धारण करने की इच्छा नही है ॥६८

मुखोल्लास—दोहा

राधा नैं बरनन कियौ, कछुक पूर्व संवाद।
ताहि सुनावत हंस कों, ललिता सहित विषाद ॥६८॥

मूल की भाषा पद्य—छप्पय

हे सखि ललिता ! कियौ प्रेम मो माहिँ मुरारी।
ता आश्रय सों मैं मर्याद धर्म की टारी॥
प्रकट निकट कौ नेह वहै अब सब बिसरायौ।
कृष्ण विरह नैं हाय बड़ौ यह दुःख दिखायौ॥
या वृन्दावन में एक क्षण इहि विधि सों संकट सहूँ।
धिक्कार मोहि लज्जा महा जो कहुँ अब जीवत रहूँ ॥६८॥

सारांश—सोरठा

त्याग्यौ हरि नैं नेह और तजी ब्रज भूमि यह।
मै न तजौं अब देह तौ है मम जीवन अधम ॥६८॥

००००

अमी कुञ्जाः पूर्वं न मम दधिरे कामपि मुदं
द्रुमालीयं चेतः सखि ! न कतिशो नन्दितवती।
इदानीं पश्यैते युगपदुपतापं विदधते
प्रभो मुक्तापेक्षे भजति न हि को वा विमुखताम्॥६६।

—श्रीकृष्णं बिना सर्व्वं एकदैव सकारणं जातमित्याह। अमीति
! अमी कुञ्जाः द्रुमाः युगपदेव तापं, लतागृहाः पूर्व्वं मम
न दधिरे कृतवन्तः, अप्रीति तु मरने अपि तु सर्व्वा, इयं द्रुमाल

वृक्षश्रेणी कतिशः कतिवारान् मम चेतो न नन्दितवती, कलय पश्य इदानीं एते कुञ्जादयः युगपदेव तापं विदधिरे कुर्व्वन्ति, तत्रार्थान्तरं कथयति स्वमुखेन हेतुमाह-प्रभौ इति प्रभौ मुक्तापेक्षे त्यक्तापेक्षे त्यक्तादरे सति को वा विमुखतां न भजति अपि तु सर्व्व एव हि निश्चये, कतिश इति शस् ॥६१॥

अनु०—हे सखि ! ये वृन्दावन के कुंज समूह, श्रीकृष्णचन्द्र के ब्रज-वास काल में कितने आनन्द-प्रद प्रतीत नहीं हुआ करते थे अपितु सब प्रकार से आनन्द प्रदान करते थे। और यह तरु राजी कितनी बार अपना आमोद प्रदान नहीं कर चुकी है अपितु बहुत बार आ-मोद प्रदान कर चुकी है। किन्तु देखो इस समय वेही कुंज, वेही वृक्ष समूह एक ही साथ मेरे हृदय में श्रीकृष्ण की स्मृति उद्दीपन करके मुझे विरह संताप दायक हो रही हैं। हा ! जब प्रभु श्रीकृष्ण ही उदासीन होगए हैं तो उसी ईश्वर के अधीन यह जगत् भी मेरे लिए क्यों न विपरीत भाव धारण करेगा। अर्थात् उसके निरपेक्ष होजाने पर संसार की सकल वस्तु मात्र ही विपरीत भाव धारण कर लेगी ॥६६॥

मुखोल्लास—दोहा

ललिता सों जो कछु कह्यो, राधा निज तन ताप।
कहत हंस सों सो सबै, पूर्व प्रसंग कलाप ॥६६॥

मूल की भाषा पद्य—छप्पय

हे सखि ललिते ! पहले लता कुंज या बन की।
भईं कहा नहिं सदा मोद दायक सो मन की ॥
कहा न कीनों हर्षित चित बहु बिधि पादपगन।
अब तू देखि दुखद बनि ये जारत हैं मम तन ॥
अलि ! जब मोको श्रीकृष्ण प्रभु त्यागन की इच्छा करत।
तब को ? न भला या जगत् में बिमुख भयौ जान्यौ परत॥६६॥

सारांश-सोरठा

करैं स्वामि निज त्याग विमुख होहिं सुख प्रद सकल।
वापी सरित तड़ाग वन उपवन फीके लगैं ॥६६॥

○○○○

**गरीयान् मे प्रेमा त्वयि परमिति स्नेहलघुता**
**न जीविष्यामीति प्रणयगरिमाख्यापनविधिः।**
**कथं नायासीति स्ववशपरिपाटीप्रकटनं**
**हरौ सन्देशाय प्रियसखि! न मे वागवसरः ॥१००॥**

टीका—नन्वेवं स्वयमेव श्रीकृष्णं प्रति वाचकं किं न प्रेरयसीति चेत्तत्राह गरीयानिति। त्वयि मम प्रेमा गरीयान् अतिगुरुतर इति अर्थाद्वचनं परं केवलं स्नेहलघुता, परस्परतुल्यता प्रेम्णोऽभावात्, यदि मय्यर्पितस्य तथाविध प्रेमास्ति तदा मत्प्रकाशनमेवायुक्तम्, तस्मान्मयि स्नेहलाघवं तस्य, अथ न जीविष्यामि इति नु प्रणयगरीमाख्यापनविधिः प्रेम्णो यो गरिमा गुरुत्वं तद् प्रकाशविधानं तस्मादेतदप्ययुक्तमित्यर्थः। अपि च त्वं कथं नायासि नागच्छसि स्ववशपरिपाटीप्रकटनं अयम्। यद्वशवर्त्ती इति या परिपाटी तस्याः प्रकाशः एतदपि कुलजाया अयुक्तम्। तस्मात् हे प्रियसखे हरौ श्रीकृष्णे सन्देशाय वाचिकदानाय मे मम वागवसरो वचनावकाशो नास्ति, कया रीत्या सन्देशं प्रेरयामीति भावः ॥१००॥

अनु०—यदि मैं श्रीकृष्ण-चन्द्र के निकट यह कहकर सम्वाद भेजती हूँ कि, तुम्हारी अपेक्षा मेरा प्रेम-महान है, तो गंभीर प्रेम की लघुता प्रगट होती है। और यदि हम कहती हूँ कि, 'तुम्हारे बिना मैं जीवन धारण करने में भी असमर्थ हूँ' तो बाह्य भाव से प्रेम की गुरुता प्रगट होगी और यदि यह कहकर सन्देश भेजूं कि, 'तुम यहां क्यों नहीं आते हो'? तो यही ज्ञात होगा कि, मैं उनको

स्मरण कर रही हूँ' अतएव हे सखि, श्रीकृष्ण-चन्द्र के भेजना मेरे वाक्य का विषय नहीं रहा है अर्थात् वह बात प्रकाशन योग्य नहीं है ॥१००॥

मुखोल्लास-दोहा

चित धरि सुनिये सकल ये, राधा कौ ततकाल।
हरिहि सुनावत हित कियौ, मोसौं कथन मराल ॥१०

मूल की भाषा पद्य—छप्पय

हे प्यारी सखि ललिते! मेरौ हित हरि माहिँ।
है असीम पै मैं न जिऔंगी यह दृढ़ ताही ॥
नेह अधिकता की यह बानी कथन प्रनाली।
क्यौं नहिँ आवत कृष्ण, कहन मेरी यह आली ॥
सो प्रगट स्ववशता कों करै कहैं सबै हरि वश भये।
या कारन बोलन समय नहिँ रही मौन मन में ठये ॥

सारांश—सोरठा

हैं ललिता के वैन कह न सकति कछु राधिका।
जानौ करुणा ऐन कही हंस इमि कृष्ण सों ॥१००॥

००००

ययौ कालः कल्पाण्यधिकलितकेलीपरिमलां
विलासार्थी यस्मिन्नचलकुहरे लीनवपुषम्।
स मां धृत्वा धूर्त्तः कृतकपटरोषां सखि! हठा-
दकार्षीदाकर्षन्नुरसि शशिलेखाशतवृताम् ॥१०१

टीका—पूर्ववृत्तान्तमनुस्मरणेनानुलापं करोति ययौ इति। हे कल्
हे कल्याणयुक्ते! उत्तरत्र यत्पदोपपादनात् स इति लभ्यते, 
नियतसम्बन्धात्। तेन स कालो ययौ गतवान् इत्यर्थः। स क इ

यस्मिन् काले स धूर्तः श्रीकृष्णः अचलकुहरे गिरिदर्यां लीनवपुषं तिरोहिताङ्गीं मां धृत्वा हठात् बलात् आकर्षयन् उरसि वक्षसि शशिलेखापदं शतधृतं चित्रशतवृतां, नख-वक्ष-तुङ्ग-शतयुक्तामिति यावत् अकार्षीत् कृतवान् । शब्दबाहुल्यमात्रपरं । धूर्तपदोपादानात् कृष्णोऽपि कपटवेशधरो निलीय धृतवानिति गम्यते । शशिलेखापद वक्रतया आर्द्र नखक्षतं बोधयति गौण्यावृत्त्या, मां कीदृशीं कलितकेलिपरिमलां कलितो धृतः केल्याः परिमलो विमर्दोत्थगन्धो यया, एतेन क्रीडाभ्यन्तर एव प्रणयकोपो ज्ञायते । यद्वा कलितो ज्ञात अर्थात् कृष्णेन केलिपरिमलो यस्यां, तदन्वेषणपरः श्रीकृष्णः तदङ्गस्य क्रीडापरिमलमाघ्राय छलेन धृतवानित्यर्थः । स कीदृक् विलासार्थी क्रीडाकांक्षी, मां काकृशीं कृतः कपटरोषो मिथ्याकोपो यया । "परिमलो विमर्दोत्थातिमनोहरगन्धयोश्चापि, सुरताभिमर्दक-सज्जविरागाद्रिसौरभे" इति मेदिनी । "धूर्तस्तु खण्डनवने धूस्तुरयोरपीति" विश्वः । "विलासो हावभेदे स्यात् लीलायामपि पुंस्ययमिति" मेदिनी । "शशिलेखा कलाभागे गुडूची-वृत्तभेदयोरिति" विश्वः । "धूस्तुरे ना विटपो त्रिषु" इति मेदिनी । विटः षिड्गः ॥१०१॥

अनु०—हे कल्याणी सखि ! अब वह समय नहीं रहा, जब वह विलासाभिलाषी धूर्त श्रीकृष्ण, मेरे गिरिराज की कन्दरा में छिपे रहने पर भी फैलती हुई मेरे अंग की सुगन्धि को पहचान कर लीला-विलास के हेतु मुझको ढूंढ़ लेते थे एवं इन्दुलेखा आदि सखियों से घिरी रहने पर भी मुझ प्रणय कोपवती को अकस्मात् आकर अपने वक्षस्थल की ओर आकर्षित कर लेते थे अथवा मेरे वक्षः स्थल को शत-शत नखक्षतादि चिह्नों से भूषित कराते थे॥१०

मुखोल्लास—दोहा

ललिता सों राधा कही, कृष्णचन्द्र रस रीति ।
सो ललिता अब हंस सों, वरनत पिछली प्रीति ॥१०१॥

मूल की भाषा पद्य-कवित्त

एहो कल्याणी सखी ललिते ! वह काल बीत्यौ,
पकरि खैंची मैं ढीठ बनमाली बल सौं।
मेरे उर माहिँ चन्द्र लेखा नख रेखा सौ सौ,
करी ता सों कीनो मैं कपट रोस छल सौं ॥
केलि हित मैंने लीनी जदपि सुगंध भीनी,
ता पै दुराई देत कन्दरा अचल सौं।
हिय हरसाने प्रेम पुंज दरसाने दृग,
काम रस साने कृष्ण बानक चपल सौं ॥११०

सारांश—सोरठा

कछु दिन प्रीति पुनीत रही एक रस कृष्ण की।
भई वहै विपरीत कठिन काल की चाल सौं ॥१०१॥

००००

कदा प्रेमोन्मीलत्पुलकविपुलाङ्गी मृगदृशां
बलादाकर्षन्तं मधुरमुरलीकाकलिकया ।
मुहुर्भ्राम्यच्चिल्लीचुलुकित-कुलस्त्रीव्रतमहं
विलोकिष्ये लीलाभरमिलदपाङ्गं मुरभिदम् ॥१०२॥

टीका—इदानीमति-लालसया यदास्ते तत् कथयति। अहं कदा व्रजपतिं श्रीकृष्णं विलोकयिष्ये द्रक्ष्यामि, कीदृशं मधुरमुरलीकाकलिकया मृगदृशां समूहं मुहु बलादाकर्षन्तं स्ववशीकुर्वन्तं स्वसमीपं नयन्तं, गृहकर्मादि परित्यज्य गमनाह्लादित्युक्तम् । कीदृश्यः प्रेमोन्मीलदिति प्रेम्णा उन्मीलन्तो उद्गच्छन्तो ये पुलकरोमाञ्चास्तैर्व्याप्यमानानि उपचितान्यङ्गानि यासां ताः, तं कीदृशं भ्राम्यन्ती या चिल्ली भ्रूलता तया चुलुकितं चुलुकवदाचरितं खण्डितमिति यावत् कुलस्त्रीणां व्रतं, यथा

कश्चिदल्पं पानीयादि चुलुकेन पिबति तथा, अस्माकं कुलव्रतं भ्रूभङ्ग्या येन स्वीकृतमित्यर्थः । चुलुकितमिति नामाङ्कान्तात् कर्म्मणि क्तः, चिल्ली-शब्दो भ्रूलतावाची, तथा च क्रमदीपिकायाम्—"लीलालकस्फुरितभा-लतलालसदीप्तं गोरोचनातिलकमुच्चलचिल्लीलास्यमिति" । व्याख्यातञ्च तट्टीकाकृद्भिः—उन्नतभ्रूलतिकमिति । अहं कीदृशी लीलाभरेण मिलन्तः संजाताश्चवन्तो अपाङ्गं यस्याः सा उन्मीलदिति । "पुलकः कृमिभेदे प्रान्तरभेदे मालाभेदे च । रोमाञ्च—हरिताल-गजान्नपिण्डे च गन्धर्व्वे इति" मेदिनी । "काकलिः तु कले सूक्ष्मध्वानौ त्वित्यमरः" । "चुलुकः प्रसृतौ भाण्डभेदे चुलुकवत् पुमानिति" मेदिनी ॥१०२॥

अनु०—अपने मधुर मुरली निनाद के द्वारा प्रेम मदिरा से मतवाली, खंजननयनी ब्रज—सुन्दरीगण को अपनी ओर बल पूर्वक आक-र्षण करते हुए, जिनका चञ्चल भृकुटि-नर्तन निरखते ही कुलवती सती ललनाओं का पातिव्रत धर्म लुप्त होने लगता है, उन श्रीकृष्ण-चन्द्रजी का अपने लीला विलासयुक्त, आनन्दवर्षी नयनाञ्चलों द्वारा कब दर्शन कर पाऊंगी ? ॥१०२॥

### मुखोल्लास—दोहा

राधा ललिता सों प्रकट, करत मिलन की आस ।
सो ललिता कहि हंस सों, भेजत हरि के पास ॥१०२॥

### मूल की भाषा—छप्पय

मैं राधा कब देखौंगी सखि ! कृष्ण मुरारी ।
हास्य वेग सों दृग कटाक्ष मम मिले सुखारी ॥
हरि दृग चंचल बार बार जल संयुत सरसत ।
बूड़यौ व्रत कुल नारिन कौ या सात्विक दरसत ॥
ध्वनि मन्द मधुर मुरली सुनत प्रकट मदन मदिरा भरीं ।
दृग छके हरिण नयनीन के बल सों आकर्षण करीं ॥१०२।

सारांश-सोरठा

नयननि सात्विक भाव अरु मुरली की मधुर ध्वनि ।
उपजावति रति चाव अंगनान के अंग में ॥
ऐसे श्री व्रज चन्द सुख निधान संकट हरन ।
तिन कौ दरस अमन्द कब मिलि है मो कों सखी ॥१०२॥

◇◇◇◇

रणद्भृङ्गश्रेणीसुहृदि शरदारम्भमधुरे
वनान्ते चान्द्रीभिः किरणलहरीभिर्धवलिते ।
कदा प्रेमोद्दण्डस्मरकलहवैतण्डिकमहं
करिष्ये गोविन्दं निविडभुजबन्धप्रणयिनम् ॥१०३॥

टीका—किञ्च रणदिति । अहं गोविन्दं वनान्ते वृन्दावने निविडभुज-बन्धप्रणयिनं करिष्ये निविडोऽविगाढो यो भुजबन्धाश्लेषस्तेन प्रणयिनं अर्थाद्युक्तं, कीदृशं प्रेमेति प्रेम्णा य उद्दण्ड उद्भटः स्मरकलहः काम-कलहः तेन तत्र वा वैतण्डिकं वितण्डया व्यवहारपरं वितण्डार्हं वा, वितण्डा विवादः अन्यमपि यथेष्टं कलहयुतं विवादपरं बन्धनप्रणयिनं करोतीति ध्वनिः । वनान्ते कीदृशे रणदिति रणतां शब्दं कुर्वतां श्रेणी पंक्तीः तस्याः सुहृदि अतिस्वच्छन्दविहारावस्थानदानात् मित्राहें यद्वा सैव सुहृद् यस्य, निरन्तरमावृत्य शोभाजननात् । पुनः कीदृशि शरदा-रम्भमधुरे शरत्कालस्य प्रवृत्त्यातिसुन्दरे, पुनः कीदृशि चान्द्रीभिः चन्द्र-सम्बन्धिनीभिः किरणलहरीभिर्धवलिते शुक्लीकृते, किरणस्य शरदि अतिस्वच्छतया लहरीत्युक्तम् । वनान्ते इत्यत्र अन्तः शब्दः स्वरूप-वाची । "अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे" इति विश्वः । "वितण्डा वादभेदे स्यात् कचीशाके शिलाह्वये । वितण्डा करवीरी च" इति विश्वः ॥१०३॥

अनु०—शरद ऋतु का आगमन होने पर, मधुरझंकार का
अलिपुंज के गान आरंभ करने पर, प्यारी चन्द्र-किरणों द्वार
विमल, धवल श्री वृन्दावन प्रान्त में, प्रणय-कलह के प्रकाण
पण्डित अर्थात् काम-कलह-कोविद श्रीगोविन्द को, अपने युगल
बाहु पाश में बन्धनकर अर्थात् भुज लताओं से सुख पूर्वक आ
लिङ्गन कर अत्यन्त अनुराग प्रदर्शित करती हुई किस दिन सुख
कर सकूंगी ॥१०३॥

मुखोल्लास—दोहा

राधा-ललिता सों कहत, कृष्ण मिलन की चाह ।
ताकों यह अब हंस सों, बरनत करि उत्साह ॥१०३॥

मूल की भाषा—छप्पय

हे ललिते ! मैं राधा या वृन्दावन माहीं ।
अति सनेह सों निज भुज बंधन की गल बाहीं ॥
कब करिहौं श्रीकृष्णचन्द्र कों आलिंगन बस ।
अहैं वितंडावादी हरि संग्राम काम रस ॥
अति मधुर शरद आरम्भ में गुंजारैं जहँ मधुपगन ।
सित कान्ति मयूखन चन्द सों सोहै वृन्दावन सघन ॥१०३॥

सारांश—सोरठा

वृन्दावन सुख पुंज यहाँ आय हरि मिलहिं जो ।
लगैं मनोहर कुंज चंचरीक चय चाँदनी ॥१०३॥

००००

मनो मे हा कष्टं ज्वलति किमहं हन्त करवै
न पारं नावारं किमपि कलयाम्यस्य जलधेः ।
इयं वन्दे मूर्ध्ना सपदि तमुपायं कथय मां
परामृष्ये यस्माद्धृतिकणिकयाऽपेक्षणिकया ॥१०४॥

टीका—उल्लंघनविरहवेदनामसहमाना धैर्यप्राप्त्युपायमिच्छन्ती यदाह तत् कथयति मन इति । हा कष्टं कृच्छ्रेण तत् मे मनः ज्वलति दुनोति, हन्त खेदे किं करवै किं करोमि ! अस्य दुःखजलधेः दुःखसमुद्रस्य पारं उत्तरतीरं न कलयामि अवारं सन्निकृष्टतीरं न कलयामि न पश्यामि । यथा जलधिमध्यपतिता पराव्वाँची तीरे अपश्यन् महादुःखदुनो भवति तथेति-भावः । मूर्ध्ना इदं वन्दे इदं प्रणामं करोमि किमर्थमित्याह-समुपायं मे मह्यं कथय येनोपायेन धृतिकणिकया धैर्यनाशनरूपात् परामृष्येयं युक्ता स्यां तरामि, कीदृश्या अपेक्ष्यतेऽसौऽपेक्षणी कर्म्मणि अनिट् स्वार्थे कः प्रत्ययकेऽन इति ह्रस्वः स्त्रियामाप् तया अपेक्षया इति यावत् । धृति यथा—"ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्ण-स्पृहता धृतिः । साहित्य-वदनोल्लासहास-प्रतिभादिकृदिति" ॥१०४॥

अनु०—हे सुमुखि ! हाय, मेरा मन विरह अनल संताप से जला जारहा है ! अब मैं क्या करूं ? इस सन्तापमय महा विरहसागर में मैं निमग्न होचुकी हूँ अब तुम्हारे चरणों में नत मस्तक हो प्रणाम करती हूँ । इस समय शीघ्र ही कोई उपाय बताओ, जिससे मुझे क्षण भर धीरज और शान्ति प्राप्त हो सके ॥१०४॥

### मुखोल्लास-दोहा

राधा पूर्व प्रसंग में, ललिता सों आलाप ।
करत कृष्ण प्रति कहन हित, विरह जनित सन्ताप ॥१०४॥

### मूल की भाषा पद्य-गीतिका

हे सुमुखि ! मेरौ जरत मन दुख हाय यह निरधार है ।
या विरह बारिधि कौ न सूझत मोहि बारापार है ॥
शिर नाय बन्दन करत मैं तू बेगि जतन सुनाउरी ।
छन मात्र धीरज धरि करौं मैं कछु बिचार बनाउरी ॥१०४॥

सारांश–सोरठा

मोहि एक पल होय धीरज या सन्ताप सों।
सखि बिचारि हिल लोय जतन लखै कछु करौं मैं ॥१०४॥

०००००

प्रयातो मां हित्वा यदि कठिनचूडामणिरसौ
प्रयातु स्वच्छन्दं मम समयधर्मः किल गतिः।
इदं सोढुं का वा प्रभवति यतः स्वप्नकपटा-
दिहायातो वृन्दावनभुवि बलान्मां रमयति ॥१०५॥

टीका—अथ स्वप्नं वर्णयति प्रयात इति। यदि असौ कठिनचूडामणिः कठिनश्रेष्ठः कृष्णो मां हित्वा प्रयातो गतः तदा स्वच्छन्दं प्रयातु, किल निश्चये, मम समयधर्म्मः कुलाचारधर्म्मः यद्वा कालकृतधर्म्मः मृत्युरित्यर्थः। गतिः मरणं, ननु यद्यसौ हित्वा गतस्तदा त्वमपि धैर्य्यमालम्ब्य किमपि न तिष्ठसीति चेत्तत्राह इदमिति। इदं सोढुं का वा प्रभवति समर्था भवति ? न कापीत्यर्थः। यतः स्वप्नकपटात् स्वप्नच्छलात् इह वृन्दावनभुवि आयातः सन् बलात् मां रमयति, यदि दूरस्थोऽपि कपटात् वञ्चयति तर्हि कथं सह्यमित्यर्थः। स्वप्नो यथा— "स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः। कोपावेग-भय-ग्लानि-सुख-दुःखादिकारक" इति। "समयः शपथाचार-सिद्धान्तेषु तथाधिक्रियाकारे च निर्देशे सङ्केते कालभाषयोरिति" मेदिनी। १०५॥

अनु०—सखि ! वह निष्ठुर शिरोमणि श्रीकृष्ण यदि मुझको परित्याग कर मथुरा चले गए हैं, तो वे स्वाधीनता पूर्वक चले जावें, मेरे लिए तो मृत्यु ही एक मात्र निष्कृति का उपाय है। उनके मथुरा चले जाने पर मुझको मान करना न्यायसङ्गत है। इसमें मेरा क्या दोष है। किन्तु इस तरह स्वप्न के से छल से वृन्दावन में आकर बल पूर्वक जो रमण करते हैं, इसको कहीं भी कोई रमणी क्या

सहन करने को समर्थ है ? मुझ मानवती को प्रसन्न न करके बल पूर्वक मुझको त्याग कर नागरियों के साथ रमण करने को मथुरा चले गए हैं तो मुझे मान होना ही चाहिए इसमें मेरा क्या दोष है? मानिनी जन बलात्कार को सहने को कदापि समर्थ नहीं है यह भाव है ॥१०५॥

मुखोल्लास—दोहा

स्वप्न चित्र ध्यान रु प्रकट, दर्शन चार प्रकार।
मोहि होत इक स्वप्न मग, सो निद्रा अनुसार ॥१०५॥

मूल की भाषा पद्य—छप्पय

हे सखि ललिते ! यही देव चूड़ामणि गिरिधर।
मोहि त्यागी मधु पुरी गये जाओ स्वतंत्र नर ॥
गयौ धर्म मेरौ को समरथ दूजी नारी।
जो सहि सकै वियोग व्यथा कौ संकट भारी ॥
करि कपट स्वप्न में बल सहित वृन्दावन भुवि आनि हरि।
निस समय संग मेरे करत रति विलास मन मोद भरि॥१०५॥

सारांश—सोरठा

राधा सरल स्वभाव स्वप्नावस्था की कथा।
मिलन सरस प्रस्ताव ललिता सों बरनन करत ॥१०५॥

००००

अनौचित्यं तस्य व्यथयति मनो हन्त मथुरां
त्वमासाद्य स्वैरं चपलहृदयं वारय हरिम्।
सखि ! स्वप्नारम्भे पुनरपि यथा विभ्रममदा-
दिहायातो धूर्त्तः क्षपयति न मे किङ्किणिगुणम्॥१०६॥

टीका—अनौचित्यमिति-तस्य श्रीकृष्णस्य अनौचित्यं मनो व्यथयति। हे सखि ! त्वं मथुरामासाद्य गत्वा चपलहृदयं चञ्चलमनसं हरिं

निवारय । एकत्रापि प्रतिनियतप्रेमाभावात् चपलचित्तता, किं तदनौचित्य-मित्याह-यथा स्वप्नारम्भे निद्राप्रथमक्षणे एव इह आयातः सन् विभ्रममदात् विभ्रमो विलासस्तत्र यो मदो गर्वः हर्षो वा तस्मात् मे मम किङ्किणीगुणं काञ्चीदाम न क्षययति न दूरीकरोति । स कीदृशः धूर्त्तः कितवः स्वप्ने तिरोभूय काञ्चीदाममोचनात् धूर्त्तत्वं, स्वप्ने तस्य दर्शनादेव सात्त्विकतया श्लथीभूतकाञ्चीगुणत्वात् तेनैव नेक्ष्यते इत्युक्तम् । सुरतसुखदानाभा-वेन केवलं काञ्चीगुणमोक्षणमिवेति भावः । किङ्किणीगुणमित्यत्र इंदुतो पूर्वोत्तरपादपाक्षिकह्रस्वः । स्वप्नदृष्टस्य निवारणकथनात् उन्मादर्शयम् । ''मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोरिति'' मेदिनी ॥१०१॥

अनु०—हे सखि ! हाय, श्रीकृष्ण का इस तरह का अनुचित व्यव-हार मेरे मन को अत्यधिक व्यथा दे रहा है अर्थात् वह लम्पट-चूडामणि, मथुरा में बिहार करें तो भले करें, किन्तु इस जगह से हमारे निकट क्यों आगमन करते हैं ? इसके लिए तुम मथुरा-जाकर उन स्वेच्छाचारी अत्यन्त चञ्चल स्वभाव श्रीकृष्ण से ऐसा करने का निषेध करदो ताकि, वह धूर्त्त स्वप्नारम्भ में विलासोन्मत्त हो इस वृन्दावन में आकर हमारे किङ्किणिगुण (किंकिणि-बन्धन) को न छेड़ा करें ॥१०६॥

मुखोल्लास—दोहा

राधा ललिता सों कहत, निज मन कौ सन्ताप ।
सो ताकों अब हंस सों, हरि प्रति करत अलाप ॥१०६॥

मूल की भाषा पद्य—छप्पय

हे सखि ! अनुचित भाव कृष्ण कौ मेरे मन कों ।
देत दुःख तू जा मथुरा स्वच्छन्द जतन कों ॥
चपल हृदय श्रीकृष्णचन्द्र तिन सों नाहीं करि ।
आय स्वप्न में रति विलास की आस धूर्त्त हरि ॥

नहिँ बेर बेर मोचन करैं कटि किंकिनि गुन फन्द कों।
या अजुगत गति व्यवहार कौ करि निषेध नँद नन्द कों॥१०६

सारांश—सोरठा

ललिता मथुरा जाय करि निषेध तू कृष्ण सों।
स्वप्न बीच बे आय किंकिनि गुन मोचैं नहीं॥१०६॥

००००

अयि स्वप्नो दूरे विरमतु समक्षं शृणु हठा-
दविश्वस्ता मा भूरिह सखि मनोविभ्रमधिया।
वयस्यस्ते गोवर्द्धनविपिनमासाद्य कुतुका-
दकाण्डे यद्भूयः स्मरकलहपाण्डित्यमतनोत्॥१०७॥

टीका—इदानीमुन्माददशां वर्णयति अयीति। अयि कोमलामन्त्रणे, हे सखि स्वप्नो दूरे तिष्ठतु आस्तां स्वप्नवार्त्ता, समक्षं प्रत्यक्षं यत् तच्छृणु इत्यध्याहारः। मनो विभ्रमधिया मनोभ्रान्तिरियमिति बुद्ध्या हठात् अवश्यस्ता अविश्वासिनी मा भूः, किं तदित्याह ते तव सुभ्रत् सखा श्रीकृष्णः गोवर्द्धनविपिनं गोवर्द्धनाश्रितवनमासाद्य कुतुकात् अकाण्डं विना यत् स्मरकलहपाण्डित्यं अतनोत् विस्तारितवान्। तथाविध क्रीडासु मनो दधती प्रत्यक्षं कलहं कुर्वन्तमेव मत्वा प्रलापं करोतीति भावः। "काण्डं नाले तरुस्कन्धे बाणे च सरणीवयोः। कुत्सिते रहसि स्तम्भे काण्डं वर्गेऽप्युदाहृतमिति" विश्वः॥१०७॥

अनु०—अयि सखि! स्वप्न की बात दूर रही, अब जाग्रत अवस्था की बात सुनो और मेरा मनोभ्रम जानकर मेरे वाक्य में अविश्वास मत करो अर्थात् तुम मन में समझो कि मैं वृन्दावन में हूँ एवं श्रीकृष्ण मथुरा में है अतः मिलन कैसे सम्भव है! सो यह केवल मेरे मन का भ्रम मात्र है। किन्तु ऐसा नहीं है क्योंकि

म्हारे सखा श्रीकृष्ण, गोवर्द्धन पर्वत के वन प्रदेश में आकर कौतुक वश बारम्बार असमय में ही काम-कलह की निपुणता का विस्तार करते हैं। तात्पर्य यह है कि—यह प्रादुर्भावोत्थ संभोग विशेष है कि निज प्रीतम के सुदूर निवास करने पर भी उनका आविर्भाव होकर मिलनानन्द प्राप्त होता है। यद्यपि ऐसा सम्भोग तो दूर की बात है तो भी सुदूर प्रवास के अन्तर्गत कहने से सम्-विधान होना युक्ति युक्त है ॥१०७॥

मुखोल्लास-दोहा

हे सखि ललिते ! व्यथा तू, औरहु सुनि करि चेत।
आय ध्यान पथ प्रकट हरि, मोहि दुसह दुख देत ॥१०७॥

मूल की भाषा पद्य—छप्पय

हे सखि ललिते ! दूरि रही यह स्वप्न ढिठाई।
सुनि प्रतच्छ तजि अविश्वास मन बुधि चतुराई ॥
तेरी वयस समान कृष्ण गोवर्द्धन बन में।
अब अवसर तहँ आय कुतूहल लें छन छन में ॥
सो काम युद्ध की चतुरता अति हठ सों करते भये।
ये चरित चपल चित चाय सों ध्यान माहिँ मो सँग ठये॥१०७

सारांश—सोरठा

जवै करत हौं ध्यान मूर्ति माधुरी कृष्ण की।
रति रस समर सुजान लूटत ज्ञान अपान निधि ॥१०७॥

००००

अमर्षाद्धावन्तीं गहनकुहरे सूचितपथां
तुलाकोटिक्वाणैश्चकितपदपातद्विगुणितैः।
दिधीर्षन्मां हर्षोच्चरलनयनान्तः स कुतुकी
न वंशीमज्ञासीद्भुवि करसरोजाद्विगलिताम् ॥१०८॥

टीका—प्रणयकोपात् धावन्तीं राधामनुधावतः श्रीकृष्णस्य सम्भ्रमेण कराद्विगलितां वंशीं दृष्ट्वैव कथयति । अमर्षादिति । अमर्षात् प्रणयकोपात् धावन्तीं मां दिधीर्षन् धर्तुमिच्छन् श्रीकृष्णः करसरोजात् भुवि गलितां वंशीमज्ञासीत् न ज्ञातवान् अर्थात् पश्येति वाक्यशेषोऽध्याहरणीयः । स कीदृक् कुतुकी कौतुकाविष्टः, पुनः कीदृक् हर्षेण उत्तरलो लोचनाञ्चलो यस्य सः, मां कीदृशीं तुलाकोटिध्वानै नूपुरध्वनिभिः दुर्गमकन्दरे यद्वा गहनं वनं तदेव दुष्प्रवेशत्वात् कुहरं तस्मिन् निविडविपिने इत्यर्थः । सूचितपथां ज्ञापित पन्था यस्याः,अतिनिविडवने द्रष्टुमशक्यापि नूपुरध्वनिश्रवणात् अनेन पथा यातीति ज्ञातमित्यर्थः । कीदृशे चकितपदपातद्विगुणितैः चकितश्चञ्चलो यः पादपातः तेन द्विगुणीकृतैः । "गेह-संकलने त्रिषु नपुंसकं गह्वरे स्यात् । दुःखकाननयोरपीति" मेदिनी । "पादाङ्गद-तुलाकोटि-मञ्जीर-नूपुरोऽस्त्रीयामित्यमरः" ॥१०८॥

अनु०—आनन्दोद्रेक से वह विनोद शील, श्यामसुन्दर, क्रोधावेश वश जल्दी २ चलकर गंभीर वन में प्रवेश करने वाली और द्रुततर गतिके कारण बढ़ जाने वाले नूपुर शब्दों से मेरा मार्ग प्रगट हो जाने पर मुझको ग्रहण करने की कामना से मेरा पीछा करने लगे थे, उस समय सहसा उनके हाथ की मुरली गिर गई और वे न जान सके,उस समय प्रेमोन्माद में उनके नयन चंचल हो गए थे। जो श्रीकृष्ण मुझे प्रसन्न कर, सुखी होने के लिए वन-प्रान्त में मेरे पीछे फिरते थे, आज वही वीतराग होकर मथुरा में निवास कर रहे हैं। अहो, यह बड़े कष्ट की बात है ॥१०८॥

मुखोल्लास—दोहा

राधा ललिता सों कहत, कृष्ण कथा रस रंग।<br>
वृन्दावन में जो करीं, पूर्व काल वसि संग ॥१०८॥

मुखोल्लास–दोहा

राधा ललिता सों कहत, कृष्ण कथा रस रंग।
वृन्दावन में जो करीं, पूर्व काल बसि संग ॥१०८॥

मूल की भाषा पद्य–छप्पय

प्रेम कोप तें वृन्दावन की लता कुंज मग।
मोहि दौरती पकरन कों कौतुकी कृष्ण ठग ॥
भये हर्ष तें दृग कटाक्ष जिन के अति चंचल।
निज कर कमलन तें वंसी जो गिरि धरातल ॥
हरि लैं सो जानी नहीं तहँ अचक अचक मम पद परे।
नूपुरन जतायौ पथ, भई दूनी धुनि धरनी धरे ॥१०८॥

सारांश–सोरठा

जानी नहिँ व्रजराज करतें जो मुरली गिरि।
भाजत पकरन काज वृन्दावन वेलीन मग ॥१०८॥

००००

अशक्तां गन्तव्ये कलितनवचेलाञ्चलतया
लतालीभिः पुष्पस्मितशबलिताभिर्विरुदतीम्।
परीहासारम्भी प्रियसखि! स मां लम्बितमुखीं
प्रपेदे चुम्बाय स्फुरदधरबिम्बस्तव सखा ॥१०९॥

टीका—अशक्तामित्यादिः। हे प्रियसखि! तव सखा परिहासारम्भे ल
म्बितमुखीं मामवेक्षणायाधोमुखीं स्फुरदधरबिम्बः सन् चुम्बनाय चुम्ब
नार्थं प्रपेदे प्रपन्नः, कीदृशीं लतालीभिः लताश्रेणीभिः कलितनवचेला
ञ्चलतया धृतनववस्त्रप्रान्ततया गन्तव्ये अपरदेशगमनेऽशक्तां, कीदृशीभि
पुष्पस्मितशबलिताभिः पुष्पाणां स्मितप्रकाशः तद्युताभिः, मां कीदृशीं
विरुदतीं मा स्पृश इति शब्दायमानां अस्यामपि तथा विधानता जाि

विशेषा एव आर्य्यः सख्यः ताभिः पुष्पवत्स्मितयुक्ताभिः घनपटाञ्चला गन्तुमशक्ता भवति तव वयस्यः तव सखेति सौलुण्ठनं नायं कोऽपीत्यर्थः ॥१०६॥

अनु०—हे प्रिय सखि ! जब कि मेरा नवीन वस्त्राञ्चल कुसुम-विकासच्छल से हास्यमयी विचित्र वन लताओं में उलझ जाने से मैं अपने गन्तव्य स्थान पर नहीं पहोंच सकी और असमर्थ हो रोदन करने लगी थी उस समय परिहास-पटु वह तुम्हारे सखा, जिनके अरुण बिम्बफल सदृश अधर, चुम्बनार्थ विकसित हो उठे थे, मेरे समीप जा पहोंचे थे ॥१०६॥

मुखोल्लास-दोहा

प्रथम मिलन श्री कृष्ण संग, भये जु भोग विलास।
राधा बीते दिनन के, वरनत ललिता पास ॥१०६॥

मूल की भाषा पद्य—छप्पय

प्यारी सखि ललिते ! नंद नन्दन सखा तुम्हारे।
मैं क्रीड़ा आरम्भहि सों ऊंचौ मुख धारे ॥
ताकौ चुम्बन करन हेत आये मो पाहीं।
फरकत तिन के अधर,लता इव अली तहाँ ही ॥
सो अंचल मम पट नवल गहि रही मिलावन मन किये।
मैं रुदन करत, वे खिली रहीं मुसकाती प्रमुदित हिये ।१०६॥

सारांश-सोरठा

भय लज्जा उर आनि करत रही संकोच मैं।
सखिन ढिठाई ठानि हरि सों मम संगम चह्यौ ॥१०६॥

००००

**ततोऽहं धम्मिल्ले स्थगितमुरलीका सखि ! शनै-
रलीकामर्षेण प्रमदविचलभ्रूरुदचलम् ।**

कचाकृष्टिक्रीडाक्रमपरिचिते चौर्य्यचरिते
हरिर्लब्धोपाधिः प्रसभमनयन्मां गिरिदरीम् ॥११०॥

टीका—ततस्तदनन्तरं अहं धम्मिल्ले स्थगितमुरलीका केशपाशकृतमुरलीका सती शनैरञ्चलं गतवती, धम्मिल्ले स्थगिता संवृता मुरली यया बहुव्रीहौ कः केचित् ह्रस्वनिषेधः। अलिकासर्वेया मिथ्याक्रोधेया भ्रमन्त्यौ आविरले भ्रुवौ यस्या सा, चौर्य्यचरिते कचाकृष्टिक्रीडाकलहानां केशानां आकर्षणेन या क्रीडा तस्या क्रमः परिपाटी तेन परिचिते ज्ञाते सति हरिर्लब्धोपाधिः प्राप्तछलः सन् 'इयं चौर्य्यकर्म्मशिक्षा निग्रहयाम' इति कर्म्मसंख्या प्राप्तोपाधिः प्रसभं बलात्, बद्ध्वा भूविवरादौ निःचेष्टुं नयतीतिध्वनिः। "केशपाशं समाकृष्य परिरम्य च निर्भरम्। यच्चुम्बनं प्रियास्यस्य कचाकृष्टिरियं मता"। अतएव जयदेवः—"सकचग्रहचुम्बनदानमिति"। "उपाधिर्धर्म्म-चिन्तायां कुटुम्बव्यापृतेषु छलविशेषयो पुंस्युपाधिः पुंसि व्याघ्रस्थाङ्गयोरिति" मेदिनी ॥११०॥

अनु०—हे सखि! उसके पश्चात् मैंने उनकी मुरली को अपने केश पाश में छिपा लिया और मिथ्या क्रोधावेश से अपनी कुटिल भृकुटी चञ्चल कर, ऐसे भाव से मैं चली जारही थी, उस समय केशाकर्षण रूप परिपाटी द्वारा, जो चौर-चूडामणि नाम से संसार में विख्यात हैं, वे जान ही गए अर्थात् उनके द्वारा मेरे केशाकर्षण करने पर मेरी चोरी प्रगट होगई और मैं समझ गई कि वही नागेन्द्र हैं, इस प्रकार वह हठ पूर्वक मुझको-गोवर्धन गिरिकन्दरा में लिवा ले गए। उनके चौर्य चरित की बातें मैं क्या सुनाऊं बाल्यकाल में स्तन पान करते करते उन्होंने पूतना के प्राण अपहरण कर लिए थे, पौगण्ड में गोपीगण के घरों में नवनीत-चोरी, कैशोर में कात्यायनी व्रत परायण ब्रज-कुमारी गण का वस्त्रापहरण किया उसके बाद मर्यादा प्राप्त हो ब्रज-कुल-ललनागण का

पातिव्रत धर्म अपहरण कर लिया, अब वह हमारे इस चि न्ताप को अपहरण करलें तो उनके "चौर" नाम का यथार्थ समझूं । यही श्रीराधाजी का अभिप्राय है ॥११०॥

मुखोल्लास-दोहा

लीला हास विलास में, चोरी चरित अनूप ।
राधा ललिता सों कह्यौ, सो वरनत तद्रूप ॥११०॥

मूल की भाषा पद्य—छप्पय

मैंने बंसी चोरि धरी निज चोटी माहीं ।
पुनि धीरे उठि चली कपट रिस करत तहाँहीं ॥
सघन भौंह अति चपल चोर करनी लखि मेरी ।
शिखा पकरि खेंची जब बंशी केशनि हेरी ॥
यह चोरी कौ मिस पाय कै मोहि लै गये गिरि दरी ।
सखि उचित जानि ता काल जनु चोर दंड दीनौ हरी॥

सारांश—सोरठा

चोरन दंड प्रदान उचित राखिवौ गिरि गुहा ।
दीनौ मोहि सुजान राधा ललिता सों कह्यौ ॥११०॥

००००

कदाचिद्वासन्तीकुहरभुवि धृष्टः सरभसं
हसन् पृष्ठालम्बी स्थगयति कराभ्यां मम दृशौ ।
दिधीर्षौ जातेर्ष्ये मयि सखि ! तदीयाङ्गुलिशिखा
न जाने कुत्राय व्रजति कितवानां किल गुरुः ॥१

टीका—अन्यामपि क्रीडामनुस्मृत्येवाह कदाचिदिति । स धृष्टः वास कुहरभुवि-माधवीमण्डलोद्भुवि हसन् सरभसं यथा स्यात् पृष्ठाल पृष्ठदेशमाश्रित्य कराभ्यां मम दृशौ स्थगयति आवृणोति, वर्त्तमान

भूते लट्। हे सखि! जातेर्ष्यं जातक्रोधं यथास्यात् तदीयाङ्गुलिशिखां तस्याङ्गुल्यग्रं मयि दीधीर्षौ-सत्यां धत्तुमिच्छन्त्यां सत्यां अयं कितवानां कुलगुरुः कुलश्रेष्ठः कुत्र व्रजति इति न जाने, अनुभवप्राप्तस्य ग्रहणासम्भवात् पूर्ववत् लट्। कृतापराधस्यापि निःशङ्कत्वात् धृष्ट इत्युक्तम्। "कृतागो अपि निःशङ्कस्तर्जितोऽपि न लज्जितः। दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः" ॥१११॥

अनु०—हे सखि, किसी समय, माधवी लता की निकुंज की ओट से, वह धूर्त्त शिरोमणि लम्पट हरि, हँसते हँसते आकर अपने दोनों हाथों द्वारा मेरे नयनों को अचानक मूंद लेते हैं, और जब मैं उनकी अंगुलियों को पकड़ना चाहती हूँ तो न जाने कहाँ जाकर छिप जाते हैं। इस प्रकार श्री राधिकाजी के हृदय में श्रीकृष्ण की ब्रजवास काल की अतीत लीलाओं की वह मधुर स्मृति उन्हें वे वर्त्तमान की सी बातें प्रतीत होने लगती हैं ॥१११॥

मुखोल्लास-दोहा

हरि हि पूर्व संभोग की, सुधि आवन तत्काल।
सुरत स्थानन के चरित, राधा कहत रसाल ॥१११॥

मूल की भाषा पद्य-गीतिका

काहू समय वे ढीठ हर्षित लता वासन्तीन सों।
नियराय मो बैठी भयी के नयन कर अँगुलीन सों॥
मम पीठ पीछे सों ढके चाहे गहन मैं रिस भरी।
कत भजि गये छलियान के गुरु सखी! नहिँ जानी परी॥१११॥

सारांश-सोरठा

भये गुप्त तत्काल चाह गहन की करत ही।
जानि परयौ नहिँ ख्याल अज हौं कपटी कृष्ण कौ ॥१११॥

०००० 

अतीतेयं वार्त्ता विरमतु पुरः पश्य सरले !
वयस्यस्ते सोऽयं स्मितमधुरिमोन्मृष्टवदनः ।
भुजस्तम्भोल्लासादभिमतपरीरम्भरभसः
स्मरक्रीडासिन्धुः क्षिपति मयि बन्धूककुसुमम्॥११२॥

टीका—अतिभावनावशात् पश्यन्तीराह व्यतीतेति । हे सरले हे उदारे इयं कथ्यमाना अतीता पूर्वभूता वार्त्ता विरमतु तिष्ठतु, पुरोऽग्रे पश्य सोऽयं य एव कथितः सोऽयं स्मितमधुरिमोन्मृष्टवदनः सन् स्मितस्य मधुरिम्णा माधुर्य्येण तन्मृष्टं वदनं यस्य, मयि बन्धूककुसुमं क्षिपति । बन्धूककुसुमसदृशोऽधरोऽत्र वाच्यः । कीदृशः भुजस्तम्भोल्लासात् भुजावेवस्तम्भौ तयोरुल्लसत् हर्षात् अभिमतोऽभीष्टः अनुमितोऽभीष्टः अनुमितो वा अर्थान्मया मनोऽनुकूलो यः परिरम्भः आलिङ्गनं तत्र रभसो यस्य सः । कीदृक् स्मरेति कामक्रीडासमुद्रः अपरिमितक्रीडाशालित्वात् । "ईषद्विकाशि वदनं स्मितं स्यात् स्पन्दिताधरः" । "सर्व्वावस्थाविशेषे तु माधुर्य्यं रमणीयता इति" ।११२॥

अनु०—हे सरले ! तुम इन श्रीकृष्ण की कपटपूर्ण बातें नहीं जानती हो, अस्तु जो बीत चुकी उन्हें रहने दो, अब वर्त्तमान काल में ही देखलो, वह काम-केलि सागर प्रसिद्ध तुम्हारे सखा, जिनका मुख मन्दहास्य की माधुरी से मण्डित है, वे अभिमत आलिङ्गन की अभिलाषा से आनन्दित हो, जिनके स्तम्भ सदृश बाहु युगल हर्ष से उल्लसित हैं, अपनी अभिलाषा मुझ पर प्रगट करने के बहाने से बन्धूक पुष्पों को मेरी ओर फैंक रहे हैं अर्थात् मेरे मन को बन्धन में डाल रहे हैं । पूर्वराग दशा में रति उद्बोधन कारण-रूप स्वाभियोग-भङ्गी इस पद्य से प्रगट होता है ॥११२॥

मुखोल्लास-दोहा

मिलन आप कौ ध्यान पथ, मानि चित्त सुविकास।
राखति राधा प्राण निज, किये दरस की आस ॥११२॥

मूल की भाषा पद्य-छप्पय

हे ललिते ! बीती बातें हरि की ह्वै पूरी।
आगे लखि तव वयस समान मधुरता रूरी॥
ऐसी मन्द हसनि सों सोहत मुख अति अद्भुत।
भुजस्तम्भ रस रास रसिक दृढ़ आलिंगन युत॥
कन्दर्प केलि सागर अगम तरन कुशल उत्साह धरि।
बन्धूक कुसुम मम ओर कों फेंकत रति की चाह करि॥११३॥

सारांश-सोरठा

ध्यानहिँ माहिँ सुजान करि समक्ष हरि आप कों।
राखै राधा प्रान प्रकट दरस की चाह सों ॥११२॥

०००

तदुत्तिष्ठ व्रीडावति निविड़मुक्तालतिकया
बधानेमं धूर्तं सखि ! मधुपुरीं याति न यथा।
इति प्रेमोन्मीलद्भवदनुभवारूढजड़िमा
सखीनामाक्रन्दं न किल कतिशः कन्दलयति ॥११३॥

का—"इमं बध्वात्र स्थापये" त्युपदिशति—हे व्रीडावति लज्जायुक्ते
[यमेव मां मुहुर्मुहुः वञ्चयति तत्तस्मात् इमं धूर्तं निबिडमुक्तालति-
या दृढ़तरमुक्तालतया तथा बधान "हे सखि ! उत्तिष्ठ यथा मधुपुरीं
याति" "अन्योऽपि चञ्चलनपरः पुनर्न भवति" नद्धा स्थापय-
ति ध्वनिः। इति अनेन क्रमेण प्रेमोन्मीलदनुभवारूढजडिमेयं किल
त्तीयां सखीनामाक्रन्दं शब्दक्रन्दनं कतिशः कतिवारान् न कन्दलयति

न वर्द्धयति । प्रेम्णा उन्मीलनेन यो भवतोऽनुभवः तेन आ-सम्यक रूढो जडिमा यस्याः, जडता यथा—"अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतुष्णीम्भावादयस्तत्र" । "आक्रन्दं क्रन्दने ऽऽह्वाने मित्रदारुणयुद्धयोः । आतद्यंपीति" मेदिनी ॥११३॥

अनु०—हे लज्जावति ललिते ! "उठो और सघन गुंथे हुए मौक्तिक लता के हार द्वारा उस धूर्त्त का बन्धन करो, जिससे वह पुनः मथुरा न जा सके" । इस प्रकार उन्मादावस्था में प्रगाढ़ प्रेम से उत्पन्न तुम्हारे आचरणों द्वारा वह जाड्य दशा को प्राप्त हो जाती है अर्थात् प्रेम की जड़ता में प्राप्त होकर कितनी ही बार हम सखि वर्ग के रोदन को बढ़ाती रहती है । अर्थात् उसकी यह दारुण दुःख दशा देखकर हम निरन्तर क्रन्दन करती रहती है ॥११३॥

मुखोल्लास—दोहा

करत आय प्रत्यक्ष हरि, मेरे संग बिहार ।
ललिता तिन कों उचित है, करन दंड उपचार ॥११३॥

मूल की भाषा पद्य—कुंडलिया

ऐसे कपटी कृष्ण कों अरी लजीली बाल ।
सखी ! पकरि उठि बांध तू अविरल मुक्ता माल ॥
अविरल मुक्ता माल माहिं या कों बाँधन किन ।
जान न मथुरा फेर तजै हम कों कबहू जिन ॥
प्रेम विवस जानति अजान निरधार मिले से ।
का न रुवावति पुनि पुनि सखियन राधा ऐसे ॥११३॥

सारांश—सोरठा

प्रकट मिलन परतीति होत प्रेम के वेग सों ।
राधा की हित रीति या अजानपन सों लखौ ॥११३॥

००००

अहो कष्टं बाल्यादहमिह सखीं दुष्टहृदया
मुहुर्मानग्रन्थिं सहजसरलां ग्राहितवती ।
तदारम्भाद्गोपीगण-रति-गुरो ! निर्भरमसौ
न लेभे लुब्धाऽपि त्वदमलभुज-स्तम्भरभसम् ॥११४॥

टीका—तस्याः प्रलापं निर्व्वर्ण्य स्वयं निर्व्विण्याह-अहो इति । अहो विस्मये किमिदमकार्य्यं मयानुष्ठितमिति विस्मयः । कष्टं दुष्टहृदया अहं सखीं इह व्रजे आबाल्याद्बाल्यमारभ्य सहजसरलां स्वभावेन कुटिलां अर्थादिमां मानग्रन्थिं मुहुर्ग्राहितवती, मान एव ग्रन्थि ग्रहेर्णत्यर्थादन्यत्वात् प्रयोजस्य कर्म्मसंज्ञा न भवतीति गौणगत्यार्थता स्वीकरणीया । तथाहि ग्रहे त्यज्यो भवतीति बोपदेवः । हे गोपीगणरतिगुरो ! तदारम्भात् मानग्रन्थिग्रहणारम्भात् प्रभृति असौ लुब्धापि आलिङ्गनलाभाभिलाषापि निर्भरं गाढं त्वदमलभुजस्तम्भरभसं तव अमलभुजस्तम्भरभसं तव अमलयोः भुजस्तम्भयोरभसं वेगं ताभ्यां रभसं वेगं हर्षं वा न लेभे न प्राप्तवती, सततं मम रक्षणपरत्वात् स्वच्छन्दपरीरम्भसुखप्राप्तेः ॥११४॥

अनु०—हे गोपी गण के प्रेम शिक्षक ! तुमने ही स्वयं उसको प्रेम परिपाटी की शिक्षा देकर उसका आस्वादन किया है, अब उसको दुःख सागर में क्यों कर मग्न कर दिया है । तुमने भली, प्रेम-शिक्षा दी है ! अहो, बड़े कष्ट की बात है ! और मेरा हृदय भी बड़ा दुष्ट है, जो बाल्य काल से ही लेकर स्वभाव सरला, अपनी इस सखी को मैंने ही 'मान' करने की शिक्षा दी थी अर्थात्-मैंने ही उसको मान करने के बन्धन में डाला है हाय, उसी समय से तुम्हारे इन्द्रनील स्तम्भतुल्य उज्ज्वल भुजाओं के-आलिङ्गन सुख के प्रति लालायित होने पर भी वह उसे लाभ करने का सौभाग्य नहीं प्राप्त कर सकी है । तुमने ही उसको चिर काल-से दुख दिया है ॥११५॥

मुखोल्लास-दोहा

ललिता बरनत हंस सों, निज कृत दोष निदान।
करत रही जो कृष्ण सों, सहज राधिका मान ॥११४॥

मूल की भाषा पद्य-छप्पय

बाल काल तें बार बार मैं दुष्ट हृदय अति।
सहज सरल सखि राधा ताकी मैं फेरी मति॥
मान रूप जो गाँठ जतन करि ग्रहन कराई।
ओरहि तें रहि ताहि मिलन चित चाह समाई॥
पै भुजलम्भ भरि भेटि कै नहिँ पायौ सुख आपकौ।
हे गोपिन रति गुरु मैं भई कारण या सन्ताप कौ ॥११४॥

सारांश-सोरठा

चाहत रही मिलाप हे हरि राधा आप सों।
यहै बिरह सन्ताप मेरी करनी सों भयौ ॥११४॥

००००

अलिन्दे कालिन्दीकमलसुरभौ कुंजवसते-
र्वसन्ती वासन्तीनवपरिमलोद्गारिचिकुराम्।
त्वदुत्सङ्गे निद्रासुखमुकुलिताक्षीं पुनरिमां
कदाहं सेविष्ये किशलयकलापव्यजनिनी ॥११५॥

टीका—स्वयमाशंसमानाह अलिन्द इति। अहं कुञ्जगृहस्य अलि
बहिर्द्वारि प्रकोष्ठे वसन्ती सती इमं पुन: कदा सेविष्ये, अहं कीदृ
किशलयकलापव्यजनिनी किशलय: नवपल्लवस्तस्य कलाप: समूह:।
व्यजनं तद्युक्ता, प्रशंसार्थे मत्वर्थप्रत्यय: बहुव्रीहीरर्थप्रतिपत्तिकरत्व
भावात् कर्म्मधारयपक्षेऽपि मत्वर्थीय:। यद्वा किशलयकलापस्य व्यज
मिति षष्ठीसमास:। प्रकृतिविकृतिसम्बन्धविवक्षायां षष्ठी। की

कालिन्दीकमलसुरभौ यमुनायाः कमलानां सुरभिर्यत्र सैस्वां । "सुरभिः सुगन्धिः शैत्यमित्युक्तम्" । कीदृशीं वासन्तीति वासन्ती माधवीलता तस्याः यो नवपरिमलः तदुद्गारिणश्चिकुराः केशाः यस्याः तां, पुनः कीदृशीं त्वदुत्सङ्गे तव क्रोडे निद्रासुखेन मुकुलिते अक्षिणी यस्याः. निद्रामदमुकुलिताक्षीति पाठे निद्रा च मदश्च ताभ्यां मुकुलिते अक्षिणी यस्याः । निद्रेयं कामजं उक्तम् । "चेतः संमीलनं निद्रा श्रम-क्लम-मदादिजा । जृम्भाक्षिमिलनेच्छ्वा सा गात्रभङ्गादि कारणम्" ॥ मदो यथा—"संमोहनानन्द-सम्मोहे मदो मधोपजे गज" इति । "सुरभिः सुगन्धिकान्तयोस्त्रिष्विति" मेदिनी ॥११४॥

अनु०—अब शीघ्र ही श्री वृन्दावन में आकर हमें जीवन दान दीजिए, ऐसा भाव व्यक्त करती हुई-श्री ललिता मथुरा में श्रीकृष्ण के प्रति अपनी अभिलाषा प्रगट करके हंस से कहती हैं:-'हे कृष्ण यमुना के कमलों से सुरभित निकुंज भवन में-श्रीराधा विराजती होगी और उनका केश कलाप माधवी लता की कुसुम सौरभ से आमोदित होगा एवं वह आपके अंक में सुख निद्रा में अर्ध निमिलित नयन हो सोरही होगी, ऐसी दशा में मैं नव किसलय-वीजन द्वारा कब उनकी सेवा का सुख प्राप्त कर सकूंगी । श्रीललिता की अगाढ़ सेवा लालसा मयी यह विज्ञप्ति है ॥११४॥

मुग्धोल्लास-दोहा

कारण राधा विरह की, निज करनी जिय जानि ।
ललिता पुनि संयोग हित, करति विनय मृदुवानी ॥११४॥

मूल की भाषा पद्य—छप्पय

हे हरि ! द्वार निकुंज गेह कालिन्दी कमलन ।
रहत सुगंधित, तहँ राधा तुम गोद तासु तन ॥
वासन्ती के नव सुमननि कच सौरभ भीने ।
अध उघरे सुख नींद भरे दृग आलस लीने ॥

वहु पातन कौं कर बीजना लिये रतिश्रम हरन कौं ।
मैं ललिता कब पाऊं समय ऐसौ, सेवा करन कौं ॥११५॥

सारांश–सोरठा

सुरभित कुंचित केश नयन उनींदे अधखुले ।
आप सहित मथुरेश कब या राधा कौं लखौं ॥११५॥

००७०

धृतानन्दां वृन्दावनपरिसरे शारदनिशा-
विलासोल्लासेन ग्लपितकवरीफुल्लकुसुमाम् ।
तव स्कन्धोपान्ते विनिहितभुजावल्लरिमहं
कदा कुञ्जे लीना रहसि विहसिष्यामि सुमुखीम् ॥११६॥

टीका–पुनरप्याशास्ते धृतानन्दामिति । अहं कदा रहसि एकान्ते कुञ्जे लीना सती सुमुखीं राधां विहसिष्यामि ? किम्भूतां वृन्दावनपरिसरे धृतानन्दां, पुनः कीदृशीं शारदनिशायां यो विलासः हर्षक्रीडाकौतुकं वा तेन ग्लपितानि मर्दितानि कवर्य्यां कुन्दादिकुसुमानि यस्यास्तां, अतिरमणीयत्वात् पूर्व्वानुभूतत्वाच्च शारदेत्युक्तम् । पुनः कीदृशीं तवेति–तव स्कन्धस्य उपान्ते विनिहिता अर्पिता भुजवल्लरी भुजलता यया, अनेन स्वाधीनभर्त्तृकात्वमुक्तम् । यदुक्तं–"कान्तरतिगुणाकृष्टा न जहाति तदन्तिकम् । विचित्रविभ्रमाशक्ता सा स्यात् स्वाधीनभर्त्तृकेति" । विलासो यथा–"धीराकृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः" इति ॥११६॥

अनु०—श्रीवृन्दावन के प्रान्त देश में, शरद् शर्वरी के समय रास-लीला के उल्लास के कारण जो आनन्द मग्न हो गई हैं और जिनके कवरी–देश से कुसुम झड़ रहे हैं और जो रसालस वश तुम्हारे कन्धे पर अपनी भुजाएं रक्खे हैं ! उस गोप-रमणी-मणि

राधा को एकान्त निकुंज स्थली में छिपी हुई मैं दर्शन कर कब परिहास कर सकूंगी ? इस पद्य में रासलीला के अन्त में निकुंज विहार का वर्णन, निविड रति विलासालस्यवश चलने में असमर्थ श्रीकृष्ण स्कंध प्रदेश में निज दोनों भुजा रक्खे कुंजभवन में छिपी राधाजी को देख परिहास करने का ललिता का अभिप्राय है ॥११६॥

मुखोल्लास–दोहा

राधा के चित में बसी, दरस आज ब्रजराज।
बरनत ललिता हंस सों, हरिहि सुनावन काज ॥११६॥

मूल की भाषा पद्य–गीतिका

धारण कियौ तुम संग सुख निशि शरद रास विलास में।
श्रम भयें बेनिन तें गिरे, प्रफुलित प्रसून हुलास में॥
तब आप के कंधनि धरीं राधा सुमुखि भुज वल्लरी।
दुरि कुंज में एकान्त ताकी हँसी कब करिहौं हरी ! ॥११६

सारांश–सोरठा

कब ह्वै हैं व्रज माँह वे राका वे जामिनी।
हरि राधा गल बाँह कबै देखि हौं नयन भरि ॥११६॥

०००० 

विदूरादाहर्तुं कुसुममुपयामि त्वमधुना
पुरस्तीरे तीरे कलय तुलसीपल्लवमिदम्।
इतिव्याजादेनां विदितभवदीयस्थितिरहं
कदा कुंजे गोपीरमण गमयिष्यामि समये ॥११७॥

टीका—पुनराशास्ते विदूरादिति। हे गोपीरमण ! इति व्याजात् छला एनां राधां समये सङ्केतसमये कदा कुञ्जं गमयिष्यामि प्रापयिष्यामि अहं कीदृशी विदितभवदीयस्थितिः विज्ञातभवदवस्थाना यत्र नीलं

रहसि ज्ञाततदुद्देशा, कोऽसौ व्याज इति आह-त्वमधुना इदं तुलसीपल्लवं कलय संचिनु, अहं विदूरात् कुसुममाहर्त्तुं आनेतुं यामि । लवलीपल्लवमिति पाठे लवलीपल्लवं "आमलकीति प्रसिद्धं" आनेतुं यामि ॥११७॥

अनु०—हे गोपीरमण ! आपको निकुंज-भवन में निवास करते जान, मैं कुसुम-चयन करने कब गमन करूंगी और "अब तुम आगे से यहां यमुना किनारे तुलसी चयन करो" श्रीराधा से यह निवेदन कर उनको इसी छल से संकेतानुरूप तुम्हारे समीप प्रेरित करूंगी । इससे सखीगण की निजाभिलाषा से शून्य, निस्वार्थ विशुद्ध प्रेमसेवा प्रगट होती है ॥११७॥

मुखोल्लास–दोहा

बीती सुरति विलास की, हरि हि हौन सुधि हेत ।
बरनत ललिता हंस सों, निज संदेस सचेत ॥११७॥

मूल की भाषा छन्द–गीतिका

बहु दूर अब मैं फूल बीनन जात, राधे ! तू तहां ।
लै राखियो नव पत्र तुलसी तीर यमुना सों यहां ॥
करि कपट हे गोपी रमण ! या राधिका कों कुंज में ।
कब भेजि हौं मैं जानि बैठे लता पादप पुंज में ॥११७॥

सारांश–सोरठा

अन्तर हित चित राखि किये राधिका सों कपट ।
फूल लैन मिस भाखि जाऊँ मिलै जु समय वह ॥११७॥

०००० 

**इति श्रीकंसारेः पदकमलयोर्गोकुलकथां**
**निवेद्य प्रत्येकं भज परिजनेषु प्रणयिताम् ।**

निजाङ्के कादम्बीसहचर वहन् मण्डनतया
स यानुच्चैः प्रेमप्रवणमनुजग्राह भगवान् ॥११८॥

टीका—उपसंहरतीति इति श्री कंसारेः पादकमलयोरिति पूर्वोक्तं सकलां गोकुलकथां निवेद्य कथयित्वा परिजनेषु प्रत्येकं प्रणयितां प्रेमयुक्तां याचकतां वा भज कुरु, परिजनानपि कुशलप्रश्नादिना प्रीणयेति यावत्। यद्वा तेष्वपि गोकुलजनानुग्रहाय श्रीकृष्णं प्रवर्त्तयितुं याचकतां भज। ननु परिजनाः बहवः सन्ति तेषु मया कति भजनीया। इति चेत्तत्राह-स कृष्णः मण्डनतया निजाङ्गकरचरणादौ यान् वहन् धारयन्, प्रेमप्रवणं यथा स्यात्तथा अनुजग्राह अनुगृहीतवान्। स्वयमतिकमनीयतायु अङ्गेषु तेषां ग्रहणं अनु-ग्रह एव। तथा चोक्तम्-"भूषणभूषणाङ्गमिति" 'प्रणयः प्रवणे प्रेम्णि' "याच्ञा विश्रम्भ-भावयोरपि निर्वाणेऽपीति" मेदिनी ॥११८॥

अनु०—हे मरालीसहचर! अपने हृदय में इस गोकुल की गाथा को अलङ्काररूप से धारण करते हुए इसे श्रीकृष्णचन्द्र के चरणों में निवेदन करके वहां पर उनके निकटवर्त्ती उनके प्रिय परिजनों के प्रति हमारा प्रेमभाव प्रदर्शित करना क्योंकि आजकल उनके सौभाग्य की सीमा नहीं है। इस जगत् में सर्वोच्च सौभाग्यशाली वे ही माने जा सकते हैं जिनके प्रति श्रीकृष्णचन्द्र अधिकाधिक प्रेम प्रदर्शित करते हैं। इससे श्रीकृष्णचन्द्र के लाभ से मथुरावासियों का सौभाग्याधिक्य और अपना दैन्य-दुर्भाग्य सूचित होता है ॥११८॥

मुखोल्लास-दोहा

निज सँदेस कहि हंस सों, ललिता-मिलन विधान।
हरि अंगनि गहनेह की, महिमा कहत सुजान ॥११८॥

मूल की भाषा पद्य—छप्पय

हे हंसी सँग रहन हार! तुम करौ निवेदन।
यह गोकुल की कथा यथारथ, हरि पद कमलन ॥

भक्ति प्रेम युत कृष्णचन्द्र के जो सेवक जन।
अरु भूषण भगवान अंग में राजत निस दिन॥
करि निपट अनुग्रह सो किये धारण अपनी देह में।
कछु भेद न जड़ चैतन्य को राखौ करन सनेह में॥११८॥

सारांश—सोरठा

धारत भूषण देह भक्तन जनु तन्मय करत।
याही विधि करि नेह राधा जी सों मिलिय हरि॥११८॥

००००

मिलद्भृङ्गीं हंसी-रमणि! वनमालां प्रथमतो
मुदा क्षेमं पृच्छन्निदमुपहरेथा मम वचः।
चिरं कंसारातेरुरसि सहवासप्रणयिनीं
किमेनामेणाक्षीं गुणवति! विसस्मार भवती॥११९॥

टीका—वनमालां प्रति यद्वाच्यं तदाह-मिलदिति। हे हंसीरमणि प्रथमतो मुदा हर्षेण वनमालां क्षेमं पृच्छन् इदं मम वच उपहरेथाः उपढौकय। वनमालामिति हेतु कर्म्म। कीदृशीं मिलद्भृङ्गीं मिलन्त्यः संगच्छमाना भृङ्ग्यो यत्र तां, इदं किं, हे गुणवति! असौ माधुर्य-सौगन्ध्यादिगुणः, अत्र गुणो ग्रन्थनसूत्रं तद्युक्ते न, एनां लक्ष्मीं राधां भवती त्वं विसस्मार विस्मृतवत्यसि? कीदृशीं कंसारातेः श्रीकृष्णस्य उरसि वक्षसि इह वासप्रणयिनीं, विस्मरणमयुक्तमेवेति भावः। यथा सहचरीममास्मीरित्यादिकथनमध्याहृत्य अनुकथने इदं एवादेशः॥११९॥

अनु०—हे हंसीरमण, आप सर्व प्रथम श्रीकृष्णचन्द्र के हृदय पर विराजने वाली उस वनमाला से जिसके अपूर्व सौरभ से आकृष्ट हो भ्रमरावलि स्वयं उसके समीप चली आती है, सानन्द कुशल प्रश्न पूछकर हमारा सब सन्देश कथन करना। कहना कि "हे

गुणवति, तुम्हारे साथ ही श्रीकृष्णचन्द्र के वक्षस्थल पर चिरकाल निवासाभिलाषिणी, अनुरागवती उस मृग नयनी राधा को क्या तुम भूल गई हो ? विस्मृति के कारण वनमाला के प्रति प्रणयाभियोग ही इसका मुख्य उद्देश नहीं है, अपितु भङ्गी-क्रम से श्रीकृष्ण से प्रश्न करना ही उद्देश है। ११९॥

सुखोल्लास-दोहा

अंग आभरन कृष्ण में, गनिय प्रथम बनमाल।
तासों यह विनती करौ, मथुरा जाय मराल ॥११९॥

मूल की भाषा पद्य-छप्पय

मधुप गुंजरत जामें सो वन माल हिये हरि।
मुदित प्रथम करि कुशल प्रश्न तासों,धीरज धरि॥
कहियो ये मम वचन अहो वन माल गुणवती।
वक्षस्थल श्रीकृष्ण माहिँ चिर काल रतिमती॥
यह मृग नयनी राधा रही प्रीति किये सहवास उर।
सो विसराई नैँ कत अवै कहौ हंस सब विधि चतुर ॥११९॥

सारांश-सोरठा

रही संग चिरकाल जो राधा सह वासिनी।
अरी हरी वन माल करी न ताकी सुधि कवहुँ ॥११९॥

०००० 

इदं किं वा हन्त स्मरसि रसिके! खण्डनरुषा
परीताङ्गी गोवर्द्धनगिरिनितम्बे मम सखी।
भिया सम्भ्रातास्यं यदिह विचकर्ष त्वयि वला-
द्‌गृहीत्वा विभ्रश्यन्नवशिखिशिखं गोकुलपतिम्॥१२०॥

टीका—पुनरपि वनमालायां व्यक्तमाह इदमिति। हे रसिके! रसम्वेदिचतुरे! हन्त खेदे, इदं किम्वा स्मरसि इदमतीत-चिन्नात् त्वदेकत्वात्

विस्मरणयोग्यं न, तदपि स्मरसि, इदमतीव चित्ताह्लादकत्वात् विस्मरणयोग्यं न तदपि स्मरसि न वेत्ति वाशब्दस्य चाभिप्रायः, इदं किं गोवर्द्धनगिरिनितम्बे गोवर्द्धनैकदेशे मम सखी त्वयि बलात् गृहीत्वा गोकुलपतिं इह विचकर्ष आकृष्टवती, भिया "सापराधोऽस्मीति" संभ्रान्ताद्य चञ्चललोचनं, पुनः कीदृशं विभ्रश्यदिति विभ्रश्यन्ती अधःपतन्ती नवा मनोहरा शिखिशिखा पिञ्छं यस्मात् यस्य वा तं, बलादाकर्षणेन शिखण्डस्य पतनम् । इयं कीदृशी खण्डनं वाताञ्चलं तेन आकृष्टतया परिताङ्गी पूर्णाङ्गी । इयमधीराखण्डिता यत उक्तं—"तर्जयेत्ताडयेत् अन्येति" अन्या अधीरेत्यर्थः ॥१२०॥

अनु०—हे रसिके वनमाले! यथार्थ रूप से संभोग रस की तो तुम ही ज्ञाता हो, क्योंकि तुम एक क्षण भी श्रीकृष्णचन्द्र के वक्षस्थल का परित्याग नहीं करती। श्रीकृष्णचन्द्र के व्रजवास काल में हमारी सखी राधा किसी दिन उनके श्रीअङ्ग में अन्य नायका सम्भोग जन्य चिन्हादि देखकर प्रणय-कोपवश अत्यन्त अधीरा हो उठी थी क्योंकि उन्होंने उसी गोवर्द्धन गिरि के मध्य उसका हस्त ग्रहण किया था, इसी कारण श्रीकृष्ण उससे इतना भय मानते थे। एक दिन जिस समय उनका नूतन, मोर पिच्छ का मुकुट स्खलित हो गया था तब तुमको देखकर श्रीराधा का क्रोध शत गुण अधिक बढ़ गया था। कारण कि, तुममें कुंकुम, मृगमद लगा रहने से श्रीकृष्ण का विशेष लाम्पट्य प्रगट होता था, इसी से श्रीराधा ने तुम्हें अपने हाथों से खींचा था, यह भी तुम्हें याद है कि नहीं? इस पद्य में श्रीराधिका जी का खण्डितानायिकोचित क्रोध प्रगट होता है ॥१२०॥

मुखोल्लास—दोहा

पुनि बन माला प्रति कहत, ललिता वचन रसाल।
पूछन जोग प्रसंग ये, जानहु उचित मराल ॥१२०॥

मूल की भाषा पद्य—छप्पय

हे वनमाले ! खेद, कबहुँ तोकों सुधि आई।
राधा तेरे तोरन हित इच्छा प्रगटाई॥
गिरि गोवर्द्धन मध्य भाग चंचल चख कीन्हे।
लेय न प्यारी तोरि यहै संभ्रम चित दीन्हे॥
नव मोर चंद्रिका मुकुट शिर भ्रमण करत व्रजपति लह्यौ।
गति दई गही वृषभानुजा सबल तोहि तोरन चह्यौ॥१२०॥

सारांश—सोरठा

हे रसिके बन माल ! राधा जब तोरन चह्यौ।
लै फिरकी नँदलाल राखी तोहि बचाय उर॥१२०॥

००००

ततः सम्भाषेथाः श्रुति-मकरमुद्रामिति मुदा
भवत्यां कर्त्तव्यः किमिति कुशल-प्रश्नजडिमा।
रुचिस्मेरा या त्वं रचयसि सदा चुम्बनकला-
मपाङ्गेन स्पृष्टा सखि ! मुररिपोर्गण्डमुकुरे॥१२१॥

टीका—अथ कुरङ्गे व्यक्तमुपदिशति तत इति। ततस्तदनन्तरं श्रुति मुदा श्रुतिमकरमुद्रां मकराकृतिकुण्डलमित्यर्थः। जात्या एकत्वं इति संभाषेथाः संकथय इति, किमित्याह—भवत्यां त्वयि कुशलप्रश्नजडिमा कुशल एव प्रश्नजडिमा आलस्यं कर्त्तव्यः तव कुशलमकुशलञ्चेति किं प्रष्टव्यं न वेत्यर्थः। निरन्तरनिरतिशयकुशलशालिन्यां कुशलप्रश्नो जडिमेति भावः। कुशलशालिता यथा—त्वं अपाङ्गेन पृष्टा सती नेत्रान्तस्यातिदीर्घत्वात्, मुररिपोः गण्डमुकुरे अतिस्वच्छत्वात् गण्ड एव मुकुरः तस्मिन् चुम्बनकलां सदा रचयसि करोषि, कीदृशी रुचिस्मेरा रुच्या कान्त्या स्मेरा देदीप्यमाना इत्यर्थः। यद्वा रुचिः कान्तिः स्मेरं

ईषद्धसनं यस्याः, अनवरतानन्दसमुद्रे विलसन्त्यास्तव सदैव कुशल-मिति भावः उक्तः । अन्यापि नायकस्यापाङ्गेन स्पृष्टा सति गण्डे चुम्बति । रुचिः परिष्वङ्गः तस् सुखेन शृंगारभावस्येर्ष्युक्ता च भवति । यदुक्तं वात्स्यायनेन—"हासो भवति शृङ्गारादिति" । कृष्णो नायकः, मकरमुद्रा नायिका, रुचिः स्त्री । "दीप्तो शोभायामभिष्वङ्गाभिलाषयो-रिति" मेदिनी ॥१२१॥

अनु०—हे हंस ! वनमाला से ऐसा प्रश्न करने के पश्चात् हर्ष पूर्वक श्रीकृष्णचन्द्र के कर्ण में विराजमान मकराकार-कुण्डल से सम्भाषण करना । उससे कुशल प्रश्न करना तो मूर्खता है, कारण कि श्रीकृष्णचन्द्र के गण्ड-युगल का चुम्बन करने वाले से कोई कुशल प्रश्न भी क्या करे ? क्योंकि वह तो कान्तिमय, हास्यपूर्ण श्रीकृष्णचन्द्र के भाव विलासी. नयनाञ्चल का स्पर्श पाते रहकर उसके बीच २ में उनका कपोल चुम्बन सहसा करते रहते हैं । इस प्रकार अयोग्य वस्तु का सौभाग्य निरीक्षण कर ईर्ष्या से यदि ब्रजसुन्दरी गण के मनों में यदि ईर्ष्या-भाव उदय होता है, इसी से उनको महाभावमयी समझना उचित है ॥१२१॥

मुखोल्लास—दोहा

वनमाला सों मिलि सखे, चपल कुंडलन कान ।
मिलिये तिन सों प्रेम करि, हैं वे भव्य प्रधान ॥१२१॥

मूल की भाषा पद्य—छप्पय

अहो हंस ! जो मकराकृति मुद्रा हरि कानन ।
तिन सों कीजै संभाषन सानन्द मुदित मन ॥
सादर कहियों हे सखि मुद्रे ! मकर कान्ति वर ।
दृग कटाक्ष सों मुकुर कपोलन कृष्णचन्द्र कर ॥
वर बस सपरस करति हौ चुम्बन क्रीड़ा धनि अहा ।
कुशल प्रश्न तुम सों करन प्रगट करत जड़ता महा ॥१२१॥

सारांश-सोरठा

तुम सों को बड़ भाग कृष्ण कपोतन मुद्रिके!
किये कोटि जप याग पावन पद् यह सुलभ नाहँ ॥१२१॥

००००

निवासस्ते देवि ! श्रवणलतिकायामिति धिया
प्रयत्नात्त्वामेव प्रणयहृदया यामि शरणम् ।
परोक्षं कृष्णीनां निभृतनिभृतं कर्णकुहरे
हरेः काकून्मिश्रां कथय सखि ! राधाविधुरताम् ॥१२२॥

टीका——कर्णमूलनिवासत्वात् त्वयैव हरेः कोमलं रहसि कथयितव्यमित्याह निवास इति । हे देवि ! मकरमुद्रे ते तव श्रवणलतिकायां निवासो वसतिः इति धिया बुद्धया प्रणयहृदया नम्रचित्ता सती त्वामेव शरणं यामि । ननु मया किं कर्त्तव्यमित्याह-कृष्णीनां परोक्षं यथा स्यात् निभृतं रहसि, तत्रापि प्रकाश्यकथने कुत्रापि तिरोभूय कश्चित् शृणोति अतः कर्णकुहर एव नतु कर्णमूले, अपीति एतत्त्वयैव शक्यमितिभावः ।"विधूरं स्यात् परिशेषणद्वयो र्विकले-त्रिष्विति"मेदिनी॥१२२॥

अनु०——हे देवि ! हे सखि ! यह मकरमुद्रा के प्रति सम्बोधन है । श्रीकृष्णचन्द्र का गण्डस्थल ही तुम्हारी लीला विलास भूमि है । उनकी श्रवणलतिका में तुम्हारा निवास है, ऐसा विचार कर प्रणय वश मैंने तुम्हारी शरण ली है, सो तुम यादवगण के परोक्ष मे अत्यन्त गुप्त भाव से श्रीकृष्णचन्द्र के कानों में शोक सन्तप्ता राधा की काकूतिमयी, कातरता को निवेदन करना अर्थात् विनयपूर्वक श्रीराधा की विरह-वेदना को श्रीकृष्ण को एकान्त के समय सुना देना ॥१२२॥

मुखोल्लास-दोहा

मकर मुद्रिका सों कहन, हंसहि रही सुनाय ।
ललिता साधन काज हित, करत विनय अधिकाय ॥१२१॥

मूल की भाषा पद्य-छन्द गीतिका

देवी मकर मुद्रे ! तुम्हारौ वास हरि कानन अहै ।
जा बुद्धि सों ये दीन ललिता आप कौ आश्रय लहै ॥
सखि ! यादवन सों अप्रकट ह्वै भेदवाद बखान में ।
दुर्बल दशा या राधिका की कहौ हरि के कान में ॥

सारांश-सोरठा

राधा की गति दीन अहो मकर मुद्रे सुनौ ।
हरि सों कहौ प्रवीन पै परोक्ष यादवन के ॥१२२॥

◇◇◇◇

परीरम्भं प्रेम्णा मम सविनयं कौस्तुभमणौ
ब्रु वाणः कुर्वीथाः पतगवर विज्ञापनमिदम् ।
अगाधा राधायामपि तव सखे ! विस्मृतिरभूत्
कथं वा कल्याणं वहति तरले हि प्रणयिता ! ॥१२३॥

टीका—कौस्तुभमणि प्रति वक्तव्यमुपदिशति परिरम्भमिति । हे पतगवर ! कौस्तुभमणौ सविनयं प्रेम्णा मम परिरम्भमालिङ्गनं ब्रु वाणः इदं विज्ञापनं कुर्वीथाः करिष्यसि । तत् किमित्याह—हे सखे ! राधायामपि आस्तां अन्यासां कथां अतिप्रेयस्यां राधायामपीति अपिशब्दस्यार्थः तव अगाधा अपारा विस्मृतिरभूदिति । अर्थान्तरन्यासेन निन्दन्नीवाह—हि निश्चितं तरले ! प्रणयिता प्रेमवत्ता कथं कल्याणं वहति नैवेत्यर्थः । अथच तरले षिङ्गे कामिजने प्रणयिता कल्याणं वहति वहत्विति कामिनीनां नित्यं नव-नव प्रियतया अस्थिरत्वात् तथा चोक्तं—"जारा उप-

पतय: भुक्तवतां स्त्रियामिति"। एवन्तु श्रीकृष्णं प्रत्याक्षेपवचनमानमिति, अथ च तरले सुरतत्यागात् तरलो मध्यपस्तस्मिन् उक्तं मध्यं सौहृद्यं नास्ति ॥१२३॥

अनु०—हे पक्षिवर ! तुम श्रीकृष्णजी के वक्षस्थल पर विराजमान कौस्तुभमणि से हमारा सप्रेम आलिंगन कह कर अति विनीत भाव से निवेदन करना कि हे सखे ! असीम प्रेम की आधार, जो श्रीराधा हैं उनको तुमने नितान्त ही भुला दिया। यह निश्चय तुम्हारी अगाध भूल है, क्योंकि तुम चञ्चल हो और श्रीकृष्ण क वक्षस्थल पर सर्वदा भूलते रहते हो, इसी कारण ऐसे चञ्चल के साथ प्रीति लगाना कभी मङ्गल-जनक नहीं होता, दूसरे सामान्यतया चञ्चल-स्वभाव वाले जन की प्रीति कभी कल्याणकार नहीं होती ॥१२३॥

मुखोल्लास—दोहा

कौस्तुभ मणि प्रति कहत अब, ललिता सविनय बैन।
कहौ हंस जाते सुनै, ब्रज पति करुणा ऐन ॥१२३॥

मूल की भाषा पद्य—छन्द गीतिका

हे पक्षि गन में श्रेष्ठ मेरी विनय कीजै प्रेम सों।
हरि हृदय कौस्तुभि मणि करौ ता सँग आलिंगन नेम सो ॥
समझाइये पुनि भूल ताकी बिपति जो राधा सही।
इन चंचलन सों प्रीति करि कल्याणता कौनैं लही ॥१२३॥

सारांश—सोरठा

थिर न रहति है प्रीति कबहुँ चंचलन के हृदय।
नाहिन होति प्रतीति चपल चितन की लखि दशा ॥१२३॥

००००

**मुहुः कूजत्काञ्चीमणिवलयमञ्जीरमुरली-**
**रवाऽऽलम्बो भ्राम्यद्युवतिकलगीतैः सुरमणे ? ।**

स किं साक्षाद्भावी पुनरपि हरेस्ताण्डवरसै-
रमन्दः कालिन्दीपुलिनभुवि तौर्यत्रिकभरः ॥१२४॥

टीका—तं पृच्छति मुहुरिति । हरेस्ताण्डवरसैः सहसा तौर्यत्रिकभरः समूहः कालिन्दीपुलिनभुवि पुनः किं साक्षाद्भविष्यति" स कीदृक् मुहुरिति मुहुः कूजन्तीनां अव्यक्तं ध्वनिं कुर्वतीनां काञ्च्यादीनां यो रवः ध्वनिः तमालम्बयितुं शीलं यस्य, काञ्ची किङ्किणी,मणिमयवलयाः कङ्कणानि, मञ्जीराणि नूपुराणि, मणिमयानीत्यनेनापि सम्बन्धः। मुरली वेणुः, मृदङ्गयादिवाद्यभाण्डं काञ्च्यादिगीतं वलयनूपुरयोः सवाधं रिति । पुनः कीदृशः भ्राम्यन्तीनां वलयीभूय नृत्यन्तीनां कलगीतं यत्र, "भ्राम्यादिति पाठे"–काञ्च्यादीनां रवालम्बी रवानुसारि भ्राम्यद्-गोपीनां गीतं यत्र,यथा काञ्च्यादयो ध्वनिं कुर्वन्ति तथा अनुरागवत्यो गोप्योऽपि गायन्तीत्यर्थः। अत्र तौर्यत्रिकमित्युक्तं । नृत्य-गीत वाद्य त्रयाणां विशेष प्रतिपत्त्यार्थं काञ्च्यादीनामुपादानं, तेनायमर्थः–काञ्च्या-दयो वाद्यभाण्डं गोप्योऽनुगानकारिण्यः श्रीकृष्णो नर्त्तकः इत्यपूर्व्वैव सामग्री, सततं हरेः हृदयनिहितत्वं हार्दं सर्व्वं जानासीति त्वां पृच्छा-मीति भावः ॥१२४॥

अनु०—हे देवमणे कौस्तुभ ! तुम श्रीकृष्णचन्द्र के हृदय पर सदा विराजमान रहकर उनका मनोगत भाव जानती रहती हो अतः तुम ही से इस विषय की जिज्ञासा करती हूँ कि, रासमण्डल में नृत्य करने वाली युवतियों के कलगीत एवं उद्दण्ड नृत्य विलास में बार २ शब्दायमान काञ्ची, मणि, वलय, नूपुर एवं मुरली रव का आश्रय लेने वाले श्रीकृष्णचन्द्र जी का, यमुना तट पर वह रासोत्सव देखने का कभी मुझको फिर भी सौभाग्य प्राप्त हो सकेगा ? ॥१२४।

मुखोल्लास–दोहा

सुधि करायवे हेतु अब, पूर्व भूत रति रास।
ललिता मणि सों कहत पुनि, कृष्ण मिलन करि आस ।१२४॥

मूल की भाषा छन्द–गीतिका

हे कृष्ण कंठाभरण चिन्तामणि कलिन्दी पुलिन में।
कब होयगो वह नृत्य ताण्डव तौर्य्यत्रिक मृदु ध्वनिन में॥
तहँ करधनी कंगनन नूपुर बांसुरी कलरव भरी।
करि गान ताल बिधान संयुत लेँहि फेरी सुन्दरी ॥१२४॥

सारांश–सोरठा

ऐसौ रास विलास पूर्व समय में जो भयौ।
कब ह्वै है आभास ताकौ फिर चिन्तामणे!॥१२४॥

○○○○

नवीनस्त्वं कम्बो पशुपरमणीभिः परिचयं
न धत्से राधाया गुणगरिमगन्धेऽपि न कृती।
तथापि त्वां याचे हृदयनिहितं दोहदमहं
वहन्ते हि क्लान्ते प्रणयमवदातप्रकृतयः ॥१२५॥

ीका—इदानीं पाञ्चजन्यं प्रति वक्तुमुपदिशति नवीन इति। हे कम्बो शंख! त्वं पशुपरमणीभिः सह परिचयं न धत्से न दधासि तथा ाधाया गुणगरिमगन्धेऽपि गुणबाहुल्यस्याऽल्पेऽपि न कृती न विद्वान्, त्र हेतुः यतः स त्वं नवीनः नूतनः, तदानीमविद्यमानासौ अज्ञाते हेतुः। महं तथापि एवमपि हृदयनिहितं दोहदं अभिलाषं त्वां याचे, द्विकर्म्मको ाचिः, ननु यदि परिचयं नास्ति तर्हि याञ्चा व्यर्थैवेति चेत्तत्राह—वहन्त ति-हि यतोऽपरिचितोऽपि अस्मासु प्रणयं करिष्यत्येवेति भावः। 'गन्धो गन्धक आमोदने गन्ध सम्बन्धि गर्व्वयोरिति" विश्वः।

"प्रकृतिः गुणसाम्ये स्यात् अमात्यादिस्वभावयोः योनौ लिङ्गे पौरमार्गे"
इति मेदिनी ॥१२५॥

अनु०—हे शङ्ख ! तुम नवीन हो, क्योंकि, श्रीव्रजेन्द्रनन्दन व्रज में निवास करते समय तो अपने कर कमल में मुरली धारण किया करते थे और मथुरा में अब तुमको धारण करते हैं इस कारण नवीन होने से तुम गोपी-गण से अपरिचित ही हो, अतएव श्री-कृष्ण के सुख के हेतुभूत श्रीराधा के गुणों का तुम विन्दु मात्र भी ज्ञान नहीं रखते, तथापि अपने मनोगत अभीष्ट के विषय में तुमसे प्रार्थना करती हूँ। कारण कि, इस संसार में जो विशुद्ध-चित्त एवं सहृदय होते हैं वे विरह-व्यथित जनों के प्रति प्रेम एवं करुणा प्रदर्शित करते ही रहते हैं, इसी कारण से मैं तुमसे निवे-दन करने को उद्यत हुई हूँ ॥१२५॥

मुखोल्लास—दोहा

अब बरनत है शंख सों, ललिता राधा प्रीति।
वहीं हंस के चित्त दृढ़, करत सँदेसे रीति ॥१२५॥

मूल की भाषा पद्य—गीतिका

हे शंख ! तुम हौ नये, गोपिन रीति पहचानत नहीं।
गुरुता गुणनि वृषभानुजा की तनिक तुम जानत नहीं ॥
प्रगटत मनोरथ मैं तदपि सुनिये निवेदन मम यहै।
विनु हेतु शुक्ल स्वभाव की शुचि कृपा दीनन पर रहै ॥१२५॥

सारांश—सोरठा

गोपीगन की प्रीति शंख नवल ! जानौ कहा।
पै शुक्लन की रीति दीनन पर राखत दया ॥
शंख चक्र अरु पद्म गदा सहित व्रजराज नें।
मथुरा में सुख सद्म धारे, तातें कहे नव ॥१२५॥

०००० 

गृहीत्वा गोविन्दं जलधिहृदयानन्दन सखे
सुखेन श्रीवृन्दावनपरिसरं नन्दतु भवान् ।
कथं वा ते गोष्ठं भवतु दयितं हंत बलवान्
यदेतस्मिन् वेणोर्जयति चिरसौभाग्यमहिमा ॥१२६॥

टीका—पुनस्तमेव प्रार्थयते गृहीत्वेति । हे सखे ! हे जलधिहृदयानन्दन ! समुद्रतनय ! अनेनेति गाम्भीर्यवतोऽपि जलनिधेः हृदयानन्दनत्वेन नातीवानन्दजनकत्वमुक्तम् । गोविन्दं गृहीत्वा श्रीवृन्दावनपरिसरे नन्दतु आनन्दयुक्तो भवतु । पुनरसम्भवमालोक्य सङ्कते कथं वेति हन्त खेदे ते तव गोष्ठं कथं वा दयितं प्रियं भवतु, तत्र हेतुमाह-यदिति । यत् यस्मात् एतस्मिन् गोष्ठे बलवान् अतिमहान् चिरसौभाग्यमहिमा चिरकालं व्याप्य वेणोः सौभाग्यस्य महत्वं जयति उत्कर्षेण वर्त्तते । अन्यस्य हर्ष-प्रधाने स्थानेऽन्यस्य कथं प्रतीति भवत्वित्यर्थः । शङ्खस्य शब्दजनकता वेणोरपि, अतः परस्परं स्पर्द्धा ॥१२६॥

अनु०—हे जलधि-हृदय-नन्दन ! आपकी उत्पत्ति समुद्र से है। आप गोविन्द को लेकर वृन्दावन में सुख पूर्वक आनन्दानुभव कीजिए। यदि आपके मन में यह शङ्का हो कि, मुझे वृन्दावन क्यों प्रिय कर एवं सुखप्रद हो सकेगा जो मैं वहाँ पर आऊँ ? इसके उत्तर में यही कहती हूँ कि, इस वृन्दावन में तो चिरकाल से वेणु-नाद रूप महा-सौभाग्य-महिमा विद्यमान है, इस कारण यह वृन्दावन, आपको अवश्य ही प्रिय हो सकेगा। श्री मथुरापुरी धामरूप से श्रेष्ठ होते हुए भी वह स्थल-मधुर-वेणु-नाद से मुखरित नहीं है, बस श्री वृन्दावन में यही विशेषता है ॥१२६॥

मुखोल्लास—दोहा

ललिता पूर्व प्रसंग में, कृष्ण संग ब्रजवास।
करन हेतु पुनि शंख प्रति विरचति वाग विलास ॥१२६॥

मूल की भाषा पद्य—छन्द गीतिका

हे जलधि मन आनन्द दायक ! शंख ! हरि के संग में ।
तुम भूमि वृन्दाबन बसहु ब्रज आय परम उमंग में ॥
हा खेद तुम प्रिय होहु गोकुल के जु कोऊ विधि पगै ।
चिर काल सों महिमा यहाँ ध्वनि बांसुरी ही की जगै ॥१२६॥

सारांश—सोरठा

या वृन्दावन माहिँ अब लौं वंसी ध्वनि रही ।
शब्द तुम्हारो नाहिँ शंख ! बसहु हरि सँग यहाँ ॥१२६॥

०००

इति प्रेमोद्गारश्रवणमनुनीय क्रमवशात्
परीवारान् भ्रातर्निशमयति चाणूरमथने ।
पुनः कोपोद्भिन्नप्रणयचटुलं तस्य निकटे
कथामाचक्षीथाः दशभिरवतारैर्विलसिताम् ॥१२७॥

टीका—उपसंहरति इति प्रेमोद्गार इति । हे भ्रातर्हंस ! चाणूरदमने श्री-कृष्णे निशमयति शृण्वति सति इति अनेन प्रकारेण प्रेमोद्गारश्रवणं यथा स्यात् प्रेमोद्गारेण प्रेमप्रकाशेन उद्गारं मनोहरं यथा स्यात् क्रमवशात् क्रमेण परिवारान् अनुनीय, तस्य चाणूरदमनस्य निकटे दशभिरवतारैर्विलसितां कृतां कथां पुनराचक्षीथाः । तस्य मीनादिदशा-वतारस्य कथां कथयिष्यसि इत्यर्थः । कोपेति—कोपेन उद्भिन्नो मिश्रितो यः प्रणयः प्रेमा तेन चटुलां रम्यां, दशावतारकथाप्रयोजनं निन्दागर्भितै-र्वाक्यैर्वाक्यविलासमात्रं ज्ञेयम् । "उद्भिन्नो दारिते मिश्रे" इत्यमरः । "चटुलं चञ्चले रम्ये" इति कोषान्तरम् ॥१२७॥

अनु०—हे बन्धु ! इस तरह प्रेम प्रगट करते हुए कि, श्रीकृष्णचन्द्र ध्यान से सुन सकें, इस तरह उनके समस्त परिवार की विनय करते

एक बार फिर उनके निकट प्रणय-कोप से उत्तेजित होकर क्रम से श्री माधव के मत्स्य, कूर्मादि दसों अवतारों की मनोरम दर) कथाओं का वर्णन करना ॥१२७॥

मुखोल्लास—दोहा

भूषण वनमालादि की, महिमा वरनि अपार।
ललिता ललित प्रसंग अब, वरनत दश अवतार ॥१२७॥

मूल की भाषा पद्य-कुंडलिया

विनती क्रम करि प्रेम सों वनमालादिक साज।
तिनकी महिमा कों कहत जाहु निकट ब्रजराज ॥
जाहु निकट ब्रजराज प्रीति उर अन्तर धारौ।
रम्यस्तुति मय पुनर्वार मृदु गिरा उचारौ ॥
अवतारन की कथा मुख्य जिनकी दश गिनती।
जाय कृष्ण सों कहो, भ्रात! मेरी यह विनती ॥१२७॥

सारांश—सोरठा

दश अवतार चरित्र भव भंजन गंजन विपति।
मधुर गिरा सों मित्र प्रेम सहित वर्णन करौ ॥१२७॥

००००

ग्रहीतुं त्वां प्रेमामिषपरिवृतं चित्तबडिशं
महामीन! क्षिप्रं न्यधित रसपूरे मम सखी।
विवेकाख्यं छित्वा गुणमथ तदग्रासि भवता
हताशेयं किंवा शिव शिव विधातुं प्रभवति ॥१२८

।—तत्र प्रथमं मीनावतारविलसितमाह-ग्रहीतुमिति। हे महामीन हामत्स्य! मम सखी राधा त्वां ग्रहीतुं स्ववशीकर्त्तुं प्रेमामि- वृतं प्रेमरूपलक्ष्यद्रव्यपरिवृतं चित्तबडिशं मनो बडिशं रसपूरे रसं ाग: स एव पुरो जलौघः तस्मिन् न्यधित अर्पितवती प्रेमशरणं म॰

अनुरागविषयं कृतवती इत्यर्थः। अथानन्तरं भवता विवेकाख्यं विवेक-सञ्ज्ञं गुणविवेकं यत्र बध्वा बडिशं क्षिप्यते, तं गुणं रज्जुं छित्वा तद्बडिशमग्रासि गिलितम्। शिव इति खेदे सम्बोधनं, इयं हताशा किं वा विधातुं कर्त्तुं प्रभवति शक्नोति। अथ च अस्याः विवेकः कर्त्तव्याकर्त्तव्यविचाराख्यगुणः आत्मनिष्ठधर्म्मविशेषोऽग्रासि अपनीतमित्यर्थः। तदिति कर्त्तव्यतामूढया अनया किं कर्त्तुं शक्यमिति प्रस्तुतार्थः। अन्योऽपि आमिषावृतं बडिशं महतो मीनस्य धारणाय जलपूरे निक्षिपति, महामीनत्वात् विवेकगुणं दण्डवद्धगुणं छित्वा यदि बडिशं ग्रसते तदा प्रतिपत्तिशून्यो मत्स्यग्रहणे हताशश्च जनो भवतीति ध्वनिः। "आमिषः पलने लोभ्यं संभोग्योत्कचयोरपि। आमिषः सुन्दराकाररूपादिविषयेऽपि चेति" विश्वः। 'विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोरिति' मेदिनी। "रज्जुस्त्रिषु वटी-गुणः" इत्यमरः। अथ च हे महामीन! महाहिंसक! मिङ् हिंसायामिनादित्वाश्च: ॥१२८॥

अनु०—हमारी सखी, महामत्स्य स्वरूप आपको प्राप्त करने की अभिलाषा करके, अपने मन रूप-वड़िश (काँटे) को प्रेम रूप (आमिष) ललचाने की वस्तु से वेष्टित कर अनुरागरूप जलप्रवाह में डाल चुकी थी, उसके पश्चात् आपने विवेक रूप रस्सी को तोड़ कर उसी कंटक को निगल लिया है अर्थात् आप उसके मन को अपहरण कर चुके हैं। हाय! ऐसी दशा में मेरी सखी राधा क्या कर सकती है, तात्पर्य यह कि, आपकी महा मोहिनी शक्ति द्वारा राधा का विवेक तथा धर्माधर्म विचार विनष्ट हो गया है। जिस विवेक रस्सी के जगत् की साध्वी स्त्रियाँ, कुल—शील, लज्जा और पातिव्रत धर्म को बाँधे रहती हैं उस रस्सी के छिन्न भिन्न होने से मेरी सखी का हिताहित ज्ञान अन्तर्धान हो गया है, वह तुम्हारे अनुराग सागर के प्रवाह में वह गया है। हाय! अब हतभागिनी राधा क्या कर सकती है, आप ही कहिए ॥१२८॥

मुखोल्लास—दोहा

प्रथम मानि श्रीकृष्ण कों, प्रबल मत्स्य आकार।
ललिता बरनत तासु की, महिमा परम उदार ॥१२८॥

मूल की भाषा पद्य—छप्पय

रस शृङ्गार प्रवाह माहिँ लखि कृष्ण मीन सम।
प्रेम मांस सों अपनो चित बंसी ढम्पित क्रम॥
डारी सपदि राधिका निज विवेक करि डोरी।
सो कीन्ही हरि ग्रास आप वह रसरी तोरी॥
अब शिव शिव यह राधा भजा कहौ जतन का करि सकत।
सब भाँति हताशा होय कें शरण आप ही की तकत ॥१२८॥

सारांश—सोरठा

कृष्ण रूप शुचि मीन गहन चह्यौ राधा तिनहिँ।
दीनी तोरि प्रवीन गुन मति बंसी चित्त की ॥१२८॥

०००००

वराकीयं दृष्ट्वा सुभगवपुषो विभ्रमभरं
तवाभ्यर्णं भेजे परमकुतुकोल्लासितमतिः।
तिरोधाय स्वाङ्गं प्रकटयसि यत्त्वं कठिनतां
तदेतत् किं न स्यात्तव कमठमूर्त्तेः समुचितम्॥१२९॥

टीका—कठिनतां स्थापयितुं कुर्म्मावतारविलसितमाह वराकीति। इयं वराकी शोच्या हे सुभगसुन्दर! सुभगवपुष! इत्येकं वा सुन्दरशब्दस्येत्यर्थः। तव विभ्रमभरं मीनावतारबाहुल्यं दृष्ट्वा परमकुतुकोल्लासितमतिः सती परमकुतुकेन उल्लासिता सानन्दा मति र्यस्याः तथा सती अभ्यर्णं तव निकटं भेजे। स्वाङ्गं निजमूर्त्तिं तिरोधाय दूरे निधाय त्वं यत् कठिनतां निर्दयत्वं प्रकटयसि तदेतत् कमठमूर्त्तेः कूर्म्मरूपस्य तः

किं समुचितं न स्यात् अपि तु स्यादेव । व्रजं विहाय मथुरागमनात् तिरोहितस्वाङ्गता, पुनः दर्शनादानात् कठिनता च, कूर्म्मो हि जले समीपस्थे सति निजदेहं पृष्ठस्थितिशाधाय कठिनतरो भवतीति तुल्यता ॥१२६॥

अनु०—हे सुभग ! यह हमारी सखी बड़ी मूर्खा है अतः इस शोचनीय दशा को प्राप्त हुई है, वह आपके श्रीअङ्ग की अतिशय शोभा को देखकर परम लौल्य से उल्लसित हो आपके समीप पहुँच चुकी थी, किन्तु आपने अपनी स्वाभाविक नराकृति को गोपन करते हुए बड़ी कठिनता प्रकाशित की है और वह युक्ति युक्त ही है कारण कि आप ही तो कूर्म (कमठ) रूप में अवतीर्ण हुए थे । अंश और अंशी में अभेद होना स्वाभाविक है ॥१२६॥

मुखोल्लास–दोहा

ललिता कच्छप मूर्ति कौं, धरत ध्यान चित लाय ।
सोई वरनत हंस सों, कहन कृष्ण प्रति जाय ॥१२६॥

मूल की भाषा पद्य–छन्द गीतिका

हे हरि ! विलोकि विलास देहाभास मूरति रावरी ।
यह अल्पमति राधा परम अभिलाष क्रीड़ा सों भरी ॥
आई तुम्हारे निकट तुम निज अंग अन्तर्हित किये ।
प्रकटत कठिनता,उचित का नहिँ कमठ की उपमा दिये ॥१२६॥

सारांश–सोरठा

कच्छप पीठ दिखाय सकल अंग ढम्पित करत ।
त्यौं हरि मथुरा जाय हम सों दीनी पीठ तुम ॥१२६॥

०००००

सदा कंसाराते ! स्फुरति चिरमद्यापि भवतः
स्फुटं क्रोडाकारे वपुषि निविडप्रेमलहरी ।

यतः सा सैरिन्ध्री मलयरुहपङ्कप्रणयिनी
त्वया क्रोडी-चक्रे परमरभसादात्मदयिता ॥१३०॥

टीका—सैरिन्ध्या मलयपंकलम्पटतया वराहमूर्त्युचितां चरित्रमाह सदेति। हे कंसाराते ! स्फुटं व्यक्तं अद्यापि क्रोडाकारे शूकराकारे भवतश्चिरं निविडप्रेमलहरी सदा स्फुरति दीप्यते। शूकरदेहे स्नेहाधिक्यमद्यापि तवेत्यर्थः। तत्र हेतुमाह—यतः सा प्रसिद्धा सैरिन्ध्री मलयरुहपङ्कप्रणयिनी चन्दनपंकदानेन प्रणयिनी प्रेमयुक्ता आत्मनस्तव दयिता पत्नी सती, तया सह परमरभसात् परमहर्षात् क्रोडीचक्रे, अत्र तया क्रोडांचक्रे इति क्रीडास्थानं चक्रे इत्यर्थः। अभूततद्भावे च्वि अनन्तादि च, "पुमान् क्रोडा उद्यानमित्यमरः"। इतर—सामान्यव्यावृत्तये आह आत्मदयितेति, आत्मनो मनसि अतिप्रिया यद्वा प्रणयिनी-शब्देन सहार्थे तृतीयातत्पुरुषः। अयंभावः—वराहपत्तनिवहेष्विति लम्पटः त्वमपि चन्दनदानमात्रेण कुब्जामपि स्त्रियमकरोः अतो वराहमूर्त्तेरितिवत् प्रेमविलसितमिति उपहासगर्भविचक्षणता सूचिता च, तत् सहजवैदग्ध्य—सौन्दर्य्ययुक्तानस्मान् त्यक्त्वा त्रिवक्रायां चन्दनमात्रस्य दानेनासक्तहृदयत्वात्। "क्रोडी भूदारमित्यमरः" ॥१३०॥

अनु०—हे कंस निकन्दन ! आज भी आपके (पूर्व काल में) वराह वपुधारी शरीर में बहुत काल व्यापी वह प्रेम-तरङ्ग दिखाई पड़ती है क्योंकि, तभी तो आपने अब अत्यन्त आनन्द पूर्वक चन्दन-कर्पूरादि लेप-कारिणी प्रेमवती उस कुब्जादासी को निज प्रियतमा जानकर उसे अपने अङ्क में धारण कर लिया है। इस पद्य में प्रणयाभियोग व्यञ्जित है। जैसे वराह (क्रोड) वपुधारी आपके दन्ताग्र में चन्द्र में कलङ्क वत् धरित्री विराजमान है वैसे ही यहाँ क्रोड (अंक) में कुब्जा विराजमान है ॥१३०॥

मुखोल्लास-दोहा

प्रकट रूप बाराह ह्वै, लियौ विष्णु अवतार।
सो ललिता श्री कृष्ण सों, वर्णन करत उदार ॥१३०॥

मूल की भाषा पद्य—छन्द गीतिका

हे कृष्ण ! काल अनादि तें वह रमा लहरी नेह में।
है आज लौं चिरकाल तें सन्दीप्त शूकर देह में॥
अब मलय चन्दन लिये कुब्जा आप निज अंकहि धरी।
जिमि चंचला चंदन वती बाराह प्रभु स्वीकृत करी ॥१३०॥

सारांश—सोरठा

लियौ क्रोड अवतार संग उदित लक्ष्मी रही।
अब श्री कृष्ण उदार आप क्रोड कुब्जा करी॥१३०॥

oooo

चिरादन्तर्भूता नरहरिमयी मूर्त्तिरभित-
स्त्वदीयो व्यापारस्तव तु न ययौ विस्मृतिपथम्।
विनीतप्रल्हादस्त्वमिह परमक्रूरचरिते
प्रसक्तो यद्भूयः परहृदयभेदं जनयसि ॥१३१॥

टीका—विरहवेदनाज्वलनेन परहृदयभेदकत्वात् नृसिंहमूर्त्तिविलसित-माह—चिरादिति। तव नरहरिमयिमूर्त्तिशरात् चिरकालं व्याप्य अन्तर्भूतापि अभितः सर्वतः त्वदीयो नृसिंहमूर्त्तिसम्बन्धिव्यापारः चेष्टा विस्मृतिपथं न ययौ। यत् यस्मात् भूयः प्रचुरं यथा स्यात् परहृदयभेदं परहृदयस्य विदारं जनयसि, त्वं कीदृक् विनीतेति—इह व्रजे विनीतः खण्डितः प्रल्हादचित्तामोदः, पुनः कीदृक् परमेति परमक्रूराणां अति-निर्दयानां चरिते शीले प्रसक्तः आसक्तः इति क्रूर इत्यर्थः। यद्वा परं केवलं अक्रूरस्य चरिते आसक्तः। अक्रूरो हि भवन्तमितो नीत्वा अस्माकं

